# SANSKRIT FIRST BOOK

[ SUITED TO BEGINNERS ]

COMPILED BY

PANDIT-KULAPATI JIBANANDA VIDYASAGARA B.A.

EDITED AND PUBLISHED WITH

ADDITIONS AND ALTERATIONS

BY

Pandit Ashubodha Vidyabhushana

AND

Pandit Nityabodha Vidyaratna.

# संस्कृतशिक्षामञ्जरी ।

प्रथमभागः ।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

सङ्कलिता ।

तदात्मजाभ्यां

पण्डित श्रीआशुबोध विद्याभूषण

पण्डित श्रीनित्यबोध-विद्यारत्नाभ्यां

संस्कृत परिवर्द्धित प्रकाशिता च ।

[illegible]संस्करणम्

कलिकातानगरे

वाचस्पत्ययन्त्रे

मुद्रिता ।

[illegible]



*Price As. [illegible] only*

To be had of :- Pandit Kulapati Jibananda Vidyasagara B.A.

Superintendent, Free Sanskrit College

2 Ramanath Mazumdar Street, Amherst Street P. O. Calcutta

# संस्कृतशिक्षामञ्जरी ।

## प्रथमभागः ।

### स्वरवर्णाः ।

( *The Vowels.* )

| | | | | | |
|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ |
| অ | আ | ই | ঈ | উ | ঊ |
| ऋ | ॠ | ऌ | ए | ऐ | ओ |
| ঋ | ৠ | ঌ | এ | ঐ | ও |
| औ । | ं | अं | ः अः | ँ | अँ । |
| ঔ | ং | অং | ঃ অঃ | ঁ | অঁ । |

| ह्रस्वाः स्वराः । | दीर्घाः स्वराः । | अयोगवाही । |
|---|---|---|
| ( *Short Vowels.* ) | ( *Long Vowels.* ) | |
| अ, इ, उ, ऋ, ऌ । | आ, ई, ऊ, ॠ, ए, ऐ, ओ, औ । | |

# स्वरसंयुक्त—व्यञ्जनवर्णाः ।

( *The Consonants.* )

| | | | | | |
|---|---|---|---|---|---|
| कवर्गः,— | क | ख | ग | घ | ङ । |
| | ক | খ | গ | ঘ | ঙ । |
| चवर्गः,— | च | छ | ज | झ | ञ । |
| | চ | ছ | জ | ঝ | ঞ । |
| टवर्गः,— | ट | ठ | ड | ढ | ण । |
| | ট | ঠ | ড | ঢ | ণ । |
| तवर्गः,— | त | थ | द | ध | न । |
| | ত | থ | দ | ধ | ন । |
| पवर्गः,— | प | फ | ब | भ | म । |
| | প | ফ | ব | ভ | ম । |
| अन्तःस्थाः,— | य | र | ल | व । | |
| | য | র | ল | ব । | |
| ऊष्मवर्णाः,— | श | ष | स | ह । | |
| | শ | ষ | স | হ । | |
| | ड़ | ढ़ । | | | |
| | ড় | ঢ় । | | | |

## स्वरवर्ण-परिचय-परीक्षा।

ई ए अ ॠ आ औ
ऊ इ ऋ उ ऌ ऐ
ओ अँ अं अः।

## व्यञ्जनवर्ण-परिचय-परीक्षा।

ख ठ फ ब ड
ढ ङ च ग ल
घ थ ण द ष
त न क य ध
प व स झ श
छ र ञ भ ट
ड़ म ह ज ढ़।

## स्वररहितव्यञ्जनवर्णाः।

क् ख् ग् घ् ङ् इत्यादि।

---

## सङ्ख्याः।

१ २ ३ ४ ५ ६ ७ ८ ९ ०

## असंयुक्तवर्णयोजना।

### अकारयोगः।

क् + अ = क। ख् + अ = ख।

| | | | |
|---|---|---|---|
| अथ | अदः | अधः | ऋणम्। |
| करः | खलः | गणः | घनः। |
| चरः | छलम् | जवः | झषः। |
| तटः | तपः | तरलः | तलम्। |
| दरः | दश | दशमः | धनम्। |
| धमनम् | धरणम् | नखम् | नदः। |
| नयः | नरः | पचः | पटः। |
| पतनम् | पदम् | फणः | फलम्। |
| बधः | बलम् | भयम् | भवः। |
| मदः | मनः | मयः | मरणम्। |
| यजनम् | यतनम् | यमः | रणः। |
| रथः | रवः | रसः | लगनम्। |
| लपनम् | लवणम् | वकः | वचनम्। |
| वदनम् | वनम् | शठः | शपथः। |
| शमः | शशधरः | समः | समयः। |
| समरः | हठः | हयः | हसनम्। |

स्वरवर्णानां योगे आकृतयः ।

क का कि की कु कू कृ कॄ के कै को कौ कं कः ।

---

आकारयोगः । आ = ा ।

क् + आ = का । ख् + आ = खा ।

| | | | |
|---|---|---|---|
| आकारः | आकाशम् | आचारः | आभा । |
| उमा | ऊषा | एका | ऐरावतः । |
| कथा | खातः | गानम् | गायकः । |
| जाता | तातः | दया | दानम् । |
| धारकः | नाम | पाठः | भाजनम् । |
| माता | मानम् | माया | यातना । |
| यानम् | राजा | रामः | लता । |
| लालसा | शाकम् | सभा | हासः । |

---

इकारयोगः । इ = ि ।

क् + इ = कि । ख् + इ = खि ।

| | | | |
|---|---|---|---|
| इति | इषिका | उचितम् | एकिका । |
| ऐहिकम् | ओषधिः | औदरिकः | किरणः । |
| गतिः | गरिमा | जितम् | नतिः । |
| पतिः | पिता | बलिः | मितिः । |
| यमिता | रसिकः | हरिणः | हितम् । |

---

## ईकारयोगः । ई = ी ।

क् + ई = की । ख् + ई = खी ।

| | | | |
|---|---|---|---|
| अलीकम् | आजीवनम् | इरावती | ईषीका । |
| उशीरम् | एणी | ऐशानी | औचिती । |
| कीचकः | गीतिः | जननी | तरणी । |
| तीरम् | दीपः | नदी | नीतिः । |
| पीड़ा | फणी | भीमः | मीनः । |
| रीतिः | लीनः | वीजम् | शशी । |
| शीतलम् | सखी | सीसकम् | हीनः । |

## उकारयोगः । उ = ु ।

क् + उ = कु । ख् + उ = खु ।

| | | | |
|---|---|---|---|
| अगुरुः | आशु | इषुधिः | उडु । |
| ऋजुः | कुलम् | खुरः | गुरुः । |
| घुणः | चतुरः | बुधः | मुकुलः । |
| मुदितः | युयुधानः | शिशुः | सुखम् । |

---

ऊकारयोगः। ऊ = ू।

क् + ऊ = कू। ख् + ऊ = खू।

अनूपम् उलूकः कूपः कूलम्।
गूढः तूणः तूणीरः टूनः।
धूमः नूतनम् पूतः भूतम्।
भूषणम् मूलम् यूथिका रूढः।
लूनम् शूलम् सूना हूणः।

---

ऋकारयोगः। ऋ = ृ।

क् + ऋ = कृ। ख् + ऋ = खृ।

अमृतम् आहृतः ईदृशः कृशः।
गृहम् घृणा तृषा दृढः।
पृथक् मृगः मृतिः वृषभः।
वृहत् शृगालः सृणिः हृदयम्।

---

ॠकारयोगः। ॠ = ॄ।

क् + ॠ = कॄ। ख् + ॠ = खॄ।

जामातॄणाम् धातॄणाम् नॄणाम्।
पितॄन् मातॄणाम् यातॄणाम्।

## एकारयोगः। ए = े।

क् + ए = के। ख् + ए = खे।

| | | | |
|---|---|---|---|
| अशेषः | आदेशः | उपमेयः | एकेशः। |
| कलेवरम् | केशः | चेतना | जेता। |
| देशः | धेनुः | भेदः | मेषः। |
| शेषः | सेतुः | सेवा | हेम। |

---

## ऐकारयोगः। ऐ = ै।

क् + ऐ = कै। ख् + ऐ = खै।

| | | | |
|---|---|---|---|
| कैलासः | जैनः | तैजसम् | तैलम्। |
| दैवम् | धैवतः | नैशः | पैतामहः। |
| भैरवः | मैनाकः | वैभवम् | शैलः। |
| शैवः | सैकतम् | हैमः | हैमवती। |

---

## ओकारयोगः। ओ = ो।

क् + ओ = को। ख् + ओ = खो।

| | | | |
|---|---|---|---|
| कोपः | कोमलम् | गोपनम् | घोषणा। |
| दोषः | बोधः | भोगः | मनोयोगः। |
| मोचनम् | रोदनम् | लोचनम् | लोभः। |
| शोकः | शोभा | सहोदरः | होमः। |

## औकारयोगः । औ = ौ ।

क + औ = कौ । ख + औ = खौ ।

कौपीनम् गौरी चौरः दौवारिकः ।
धौतम् नौका पौषः मौनम् ।
यौवनम् रौरवः लौहम् सौरभम् ।

## अनुस्वारयोगः । ं ।

क + ं = कं । ख + ं = खं ।

अंशः अंशुः आशंसा कंसः ।
मांसम् वंशः विंशतिः संशयः ।
संसारः सिंहः हंसः हिंसा ।

## विसर्गयोगः । ः ।

क + ः = कः । ख + ः = खः ।

अतः ऊधः एणः दुःखम् ।
दुःशीलः निःशेषः पुनःपुनः शिरःपीड़ा ।

## असंयुक्तवाक्योदाहरणम् ।

### प्रथमः पाठः ।

गता रजनी ।
ऊषा राजते ।
शिशिरं शोभते ।
शेफालिका पतिता ।
बालकं जागरयति ।
गायको गायति ।
कोकिलः कूजति ।
शुकः पठति ।
रविः उदेति ।
झटिति जागृहि ।
वसनं परिधेहि ।
पाठे मनो निवेशय ।

### द्वितीयः पाठः ।

समीरणो वहति ।
मेघो नदति ।
तड़ित् विलसति ।
शिशुः रोदिति ।
शीतं भवति ।
अधुना वसनावृतो भव ।
किं पठसि ?
अहं करोमि ।
जलं पिब ।
चिराय जीव ।
अनृतं मा वद ।
कथमिदं वहसि ?

## तृतीयः पाठः।

पापं मा कुरु। परुषं मा वद।
कोपं परिहर। विपदि धीरो भव।
वेगेन मा धाव। अवहितः शृणु।
न च दैवात् परं बलम्। हिंसा न विधेया।
किंनामको भवान्? मानवो भवति शतायुः।
रोषो हि विषमो रिपुः। अपि कुशली भवान्?

---

## चतुर्थः पाठः।

---

गुरवे नमः कुरु।
गुरुभोजनं रोगमूलम्।
मातापितरौ पूजनीयौ।
गुरूपदेशं परिपालय।
कदापि अनृतं मा वद।
सः निजपाठे मनोयोगी।
भवान् केवलं वृथा कालं नयति।
अलसः वृथा कालं यापयति।
परधने लोभो न करणीयः।
एकाकी रहसि किमपि मा खाद।

---

## पञ्चमः पाठः।

लोभं परिहर। लोभेन समं पापं कुतः? भवान् कदापि लोभं मा करोतु।

---

सततं साधूनां समागमो विधेयः। साधु-समागमेन हि लोकः सुशीलो भवति। सुशीलः खलु यशसा चिरं राजते।

---

परधनापहरणं दोषावहम्। यः चोरयति स जगति सकलैः अनादृतो भवति। भवान् कदापि चौराचारं मा करोतु।

---

आजीवनं सुकृतनिरतो भव। सुकृतम् एव जनानाम् ऐहिक-पारलौकिक-सुख-साधनम्। तेन च हीनाः पशुभिः समानाः।

---

दीनेषु दया विधेया। यः दीनेषु दयां करोति सः पूतमनाः भवति। मनसि पूते सकलं शुभं भवति। भवान् सततं दीनेषु दयां करोतु।

---

## संयुक्तवर्णाः।

### ण-संयोगः।

ग् + ण = ग्ण। ष् + ण = ष्ण।

ग्ण—ग् + ण = ग्ण—रुग्णः।

ष्ण—ष् + ण = ष्ण—निषण्णः, विषण्णः।

ष्ण—ष् + ण = ष्ण—तृष्णा, सहिष्णुः।

ह्ण—ह् + ण = ह्ण—अपराह्णः।

---

### उदाहरणम्।

रुग्णः विषण्णः भवति। बालः न सहिष्णुः। अपराह्णे जनः तृष्णाविरहितो मोदते।

---

### न-संयोगः।

क् + न = क्न। ख् + न = ख्न।

क्न—क् + न = क्न—शक्नोति।

ग्न—ग् + न = ग्न—निमग्नः, अग्निः।

घ्न—घ् + न = घ्न—कृतघ्नः, विघ्नः।

त्न—त् + न = त्न—यत्नः, रत्नम्।

द्न—द् + न = द्न—मृद्नाति।

ध्न—ध् + न = ध्न—गृध्नुः।

न्न—न् + न = न्न—अन्नम्, अवसन्नः।

म्न—म् + न = म्न—निम्नगा, आम्नायः।

स्न—स् + न = स्न—स्नातकः, स्नायुः, स्नेहः।

ह्न—ह् + न = ह्न—चिह्नम्, वह्निः।

---

### उदाहरणम्।

स यातुं शक्नुयात्। अग्निः दहति। संभुग्नपदः दुःखिन वसति। रिपुघ्नः लभते महीम्। रत्नं गृह्णाति भेषजाय भिषक्। गृध्नुः दुःखसहिष्णुः। आम्नायवचनोपमम्। भोजनात् परं न स्नायात्। वह्निः शीतं निवारयति।

---

### म-संयोगः।

क + म = क्म। ग + म = ग्म।

क्म—क् + म = क्म—रुक्मम्, रुक्मिणी।

ग्म—ग् + म = ग्म—तिग्मम्, वाग्मी।

ङ्म—ङ् + म = ङ्म—वाङ्मयम्, पराङ्मुखः।

ट्म—ट् + म = ट्म—कुड्मलम्।

ण्म—ण् + म = ण्म—हिरण्मयम्, षाण्मातुरः।

त्म—त्+म=त्म—आत्मा, आत्मीयः।

द्म—द्+म=द्म—छद्म, पद्मम्।

ध्म—ध्+म=ध्म—आध्मातः।

न्म—न्+म=न्म—जन्म, मृन्मयः, उन्मादः।

प्म—प्+म=प्म—पाप्मा।

म्म—म्+म=म्म—सम्मतिः, सम्मानः।

ल्म—ल्+म=ल्म—गुल्मः, जाल्मः।

श्म—श्+म=श्म—श्मशानम्, रश्मिः।

ष्म—ष्+म=ष्म—ऊष्मा।

स्म—स्+म=स्म—भस्म, स्मरणम्।

ह्म—ह्+म=ह्म—जिह्मः।

---

उदाहरणम्।

रुक्मं शोभनीयम्। छद्मना किमपि न करणीयम्। उषसि पद्मकुट्मलं विकसति। मौनं सम्मतिसूचकम्। गुरूणां सम्मानं कुरु। जाल्मः अश्मानमपि रत्नं मनुते। श्मशानकुसुमेन देवता न पूजनीया। ऊष्मणि आतपः तिग्मः भवति। जिह्मः कृतमुपकारं विस्मरति।

## य-संयोगः ।

य = ा । क + य = क्य ।

क्ा—क् + य = क्य—ऐक्यम्, चाणक्यः, वाक्यम् ।
ख्ा—ख् + य = ख्य—सख्यम्, आख्या, उपाख्यानम् ।
ग्ा—ग् + य = ग्य—भोग्यम्, योग्यता ।
च्ा—च् + य = च्य—उदीच्यः, विवेच्यम् ।
ज्ा—ज् + य = ज्य—पूज्यः, ज्योतिः ।
ट्ा—ट् + य = ट्य—कापट्यम्, नैकट्यम् ।
ठ्ा—ठ् + य = ठ्य—पाठ्यम्, शाठ्यम् ।
ड्ा—ड् + य = ड्य—जाड्यम्, ताड्यमानः ।
ढ्ा—ढ् + य = ढ्य—आढ्यः ।
ण्ा—ण् + य = ण्य—पुण्यम्, महारण्यम् ।
त्ा—त् + य = त्य—नित्यम्, सत्यम्, मृत्युः ।
थ्ा—थ् + य = थ्य—अकथ्यम्, मिथ्या ।
द्ा—द् + य = द्य—अद्य, सद्यः, विद्या ।
ध्ा—ध् + य = ध्य—अबाध्यः, असाध्यः ।
न्ा—न् + य = न्य—मान्यम्, शून्यम् ।
प्ा—प् + य = प्य—कुप्यम्, दीप्यम्, याप्यम्, रौप्यम् ।
भ्ा—भ् + य = भ्य—अभ्यासः, अभ्युदयः ।
म्ा—म् + य = म्य—रम्यम्, वैषम्यम् ।

य्य—य् + य = य्य—आतिशय्यम्, शय्या।

ल्य—ल् + य = ल्य—बाल्यम्,मूल्यम्, कल्याणम्।

व्य—व् + य = व्य—काव्यम्,तालव्यः,दिव्यम्,नव्यः।

श्य—श् + य = श्य—आवश्यकम्, श्यामः।

ष्य—ष् + य = ष्य—दूष्यम्, पोष्यम्, शोष्यम्।

स्य—स् + य = स्य—आलस्यम्, शस्यम्।

ह्य—ह् + य = ह्य—दाह्यम्, लेह्यम्, वाह्यम्।

---

उदाहरणम्।

सत्यमेव जयति। ततः सदा सत्यं वाक्यं कथनीयम्। यः सत्यं वदति, तेन महापुण्यं लभ्यते, तस्य मुख्यता च भवति। यः मिथ्या कथयति, स जघन्यः, लोकानां घृण्योऽपि भवति। भवान् कदाऽपि मिथ्या न कथयेत्।

विद्यया समं धनं नास्ति। वाङ्मयं गद्यं पद्यं वा भवति। नियतिः केन बाध्यते? रम्यं लेहयति। शस्यं कुप्यमिव दृश्यम्।

## र-संयोगः ।

र = ्र । क् + र = क्र ।

क्र—क् + र = क्र—वक्रः, क्रूरः, क्रोधः ।

ग्र—ग् + र = ग्र—ग्रहणम्, ग्रामः, न्यग्रोधः ।

घ्र—घ् + र = घ्र—व्याघ्रः, शीघ्रम् ।

ज्र—ज् + र = ज्र—वज्रम् ।

त्र—त् + र = त्र—गात्रम्, त्राणम्, त्रुटिः ।

द्र—द् + र = द्र—द्रव्यम्, रौद्रम्, निद्रा ।

ध्र—ध् + र = ध्र—गृध्रः, ध्रुवम् ।

प्र—प् + र = प्र—प्रणयः, प्रायः ।

ब्र—ब् + र = ब्र—ब्रध्नः, ब्राह्मणः

भ्र—भ् + र = भ्र—भ्रमिः, भ्रुकुटिः ।

म्र—म् + र = म्र—आम्रः, नम्रः ।

व्र—व् + र = व्र—व्रणः, व्रीड़ा ।

श्र—श् + र = श्र—श्रमः, श्रवणम्, शुश्रूषा ।

स्र—स् + र = स्र—सहस्रम्, स्रोतः ।

ह्र—ह् + र = ह्र—ह्रदः, ह्रासः, ह्रेषा ।

## उदाहरणम्।

क्रूरता परित्याज्या। क्रोधेन समः दोषः न विद्यते। वज्रं प्रहरणं शक्रस्य। प्रातः ब्रध्नः भ्राजते। क्रमेण नम्रो भवेत्। यः विद्याऽभ्यासे प्रतिदिनं परिश्रमं करोति, विद्या तस्य प्रसीदति।

श्रमेण गात्रात् वारि स्रवति। व्याघ्राः हिंस्राः प्राणिनः। शैत्येन ग्रीष्मः ह्रसति।

---

## रेफ-संयोगः।

र = र्। र्+क = र्क।

ऋ—र्+ऋ = र्ऋ—नैर्ऋतः।

र्क—र्+क = र्क—अर्कः, तर्कः, कर्कशः

र्ख—र्+ख = र्ख—मूर्खः।

र्ग—र्+ग = र्ग—दुर्गः, विसर्गः।

र्घ—र्+घ = र्घ--दीर्घः, महार्घः।

र्च—र्+च = र्च—अर्चना, चर्चा।

र्ज—र्+ज = र्ज—विसर्जनम्।

र्झ—र्+झ = र्झ—निर्झरः।

र्ण—र् + ण = र्ण—कर्णः, वर्णः।

र्थ—र् + थ = र्थ—अर्थः, व्यर्थः, समर्थः।

र्द—र् + द = र्द—कर्दमः, निर्दयः।

र्ध—र् + ध = र्ध—निर्धनः।

र्न—र् + न = र्न—दुर्नाम।

र्प—र् + प = र्प—शूर्पः, सर्पः, कर्पूरम्।

र्ब—र् + ब = र्ब—दुर्बलः, दुर्बोधः।

र्भ—र् + भ = र्भ—निर्भरम्, दुर्भावना।

र्म—र् + म = र्म—निर्माणम्।

र्ल—र् + ल = र्ल—दुर्लभः।

र्व—र् + व = र्व—खर्वः, गर्वः, सर्वः।

र्श—र् + श = र्श—दर्शनम्, परामर्शः।

र्ष—र् + ष = र्ष—अमर्षः, हर्षः, वर्षाः, मुमूर्षुः

र्ह—र् + ह = र्ह—गर्हितम्।

---

## उदाहरणम्।

अर्कः सर्वं प्रकाशयति। साधुः सुरलोकं प्रार्थयते। कर्दमो हि वर्णं मलिनयति। गर्वं खर्वयति बली। अवर्षणे शस्यं महार्घं भवति।

## ल-संयोगः।

क्+ल = क्ल। ग्+ल = ग्ल।

क्ल—क्+ल=क्ल—क्लमः, शुक्लः, क्लेशः।
ग्ल—ग्+ल=ग्ल—ग्लानं, ग्लानिः।
प्ल—प्+ल=प्ल—प्लावनम्, प्लुतम्।
म्ल—म्+ल=म्ल—अम्लं, म्लानम्।
ल्ल—ल्+ल=ल्ल—पल्लवः, कल्लोलः।
श्ल—श्+ल=श्ल—श्लाघा, श्लेषः, श्लोकः।
ह्ल—ह्+ल=ह्ल—आह्लादः।

---

## उदाहरणम्।

लोकः क्लमेन सीदति। क्लेशः संजायते भृशम्। यः प्रत्यहं ग्लानिं नानुभवति, तस्य मतिः परिम्लाना न भवति। प्लवमानो म्लायते। आत्मश्लाघा न शोभते विदुषाम्। सदा आह्लादितेन भवितव्यम।

## व-संयोगः ।

व = ् । क् + व = क्व ।

क्व—क् + व = क्व—क्वणनम्, पक्वम् ।

ज्व—ज् + व = ज्व—ज्वरः ।

ट्व—ट् + व = ट्व—खट्वा ।

ड्व—ड् + व = ड्व—प्राड्विवाकः ।

त्व—त् + व = त्व—त्वरा, सत्वरम् ।

द्व—द् + व = द्व—द्वारम्, द्वीपः, द्वेषः ।

ध्व—ध् + व = ध्व—ध्वनिः, ध्वंसः ।

न्व—न् + व = न्व—अन्वेषणम् ।

ल्व—ल् + व = ल्व—उल्वणः, पल्वलम् ।

श्व—श् + व = श्व—आश्वासः, निश्वासः, श्वेतः ।

स्व—स् + व = स्व—स्वभावः, स्वादु, पयस्विनी ।

ह्व—ह् + व = ह्व—आह्वानम् ।

---

### उदाहरणम् ।

पक्वानि आम्रफलानि रम्याणि । पल्वल-जलेन संक्रामकः ज्वरः जायते, तत् तु सत्वरं

परिहरेत्। अश्नत् सुस्वादु भोजनीयम्। अध्वनि स्वैरं यायात्। आह्वानं विना कुत्रापि मा व्रजेत्। गुरुजनं दूरात् न आह्वयेत्।

---

## व्यञ्जनद्वयसंयोगः।

क्क—क्+क=क्क—चिक्कणम्, कुक्कुटः।

क्त—क्+त=क्त—आसक्तः, भक्तिः।

क्ष—क्+ष=क्ष—विचक्षणः, दीक्षा, परीक्षा।

ग्ध—ग्+ध=ग्ध—दुग्धं, मुग्धः।

ग्न—ग्+न=ग्न—भग्नः, मग्नः।

ङ्क—ङ्+क=ङ्क—कलङ्कः, शङ्का, अङ्कुरः।

ङ्ख—ङ्+ख=ङ्ख—शङ्खः, शृङ्खला।

ङ्ग—ङ्+ग=ङ्ग—भङ्गः, सङ्गः, अङ्गारः।

ङ्घ—ङ्+घ=ङ्घ—सङ्घः, लङ्घनम्।

च्च—च्+च=च्च—उच्चारणम्।

च्छ—च्+छ=च्छ—पुच्छः, आच्छादनम्।

च्ञ—च्+ञ=च्ञ—याच्ञा।

ज्ज—ज्+ज=ज्ज—सज्जा, लज्जितः।

ज्झ—ज् + झ = ज्झ—कुज्झटिका, उज्झितः।

ज्ञ—ज् + ञ = ज्ञ—ज्ञानम्, प्रज्ञा।

ञ्च—ञ् + च = ञ्च—अञ्चलम्, चञ्चलः, सञ्चारः।

ञ्छ—ञ् + छ = ञ्छ—लाञ्छना, वाञ्छा।

ञ्ज—ञ् + ज = ञ्ज—अञ्जलिः, रञ्जितः, पञ्जी।

ञ्झ—ञ् + झ = ञ्झ—झञ्झा।

ट्ट—ट् + ट = ट्ट—अट्टः, अट्टालिका।

ड्ग—ड् + ग = ड्ग—खड्गः।

ड्ड—ड् + ड = ड्ड—उड्डीनः।

ण्ट—ण् + ट = ण्ट—कण्टकम्, घण्टा।

ण्ठ—ण् + ठ = ण्ठ—आकण्ठम्, लुण्ठनम्।

ण्ड—ण् + ड = ण्ड—खण्डम्, पण्डितः, गण्डूषः।

ण्ढ—ण् + ढ = ण्ढ—षण्ढः।

त्क—त् + क = त्क—चीत्कारः, फुत्कारः।

त्त—त् + त = त्त—सत्तमः, उत्तापः।

त्थ—त् + थ = त्थ—उत्थानम्, समुत्थितः।

द्ग—द् + ग = द्ग—मुद्गरः, उद्गारः।

द्घ—द् + घ = द्घ—उद्घाटना।

द्द—द् + द = द्द—उद्दामा, उद्देशः।

द्ध—द् + ध = द्ध—बद्धः, वृद्धः, सिद्धिः।

द्भ—द्+भ=द्भ—उद्भवः, सद्भावः।

न्त—न्+त=न्त—अन्तः, वृन्तम्, सन्तानः।

न्थ—न्+थ=न्थ—रोमन्थनम्, पन्थाः।

न्द—न्+द=न्द—मन्दिरम्, उन्दुरुः, सन्देहः।

न्ध—न्+ध=न्ध—अन्धः, सन्धानम्, बन्धुः।

प्त—प्+त=प्त—तृप्तः, दृप्तः, लिप्तः।

ब्ज—ब्+ज=ब्ज—अब्जम्, कुब्जः।

ब्द—ब्+द=ब्द—अब्दः, शब्दः।

ब्ध—ब्+ध=ब्ध—प्रारब्धम्, लुब्धः।

म्प—म्+प=म्प—कम्पः, झम्पः।

म्फ—म्+फ=म्फ—रम्फणम्।

म्ब—म्+ब=म्ब—अम्बरम्, अम्बा।

म्भ—म्+भ=म्भ—आरम्भः, गम्भीरम्।

ल्क—ल्+क=ल्क—शुल्कः, उल्का।

ल्ग—ल्+ग=ल्ग—वल्गनम्, फल्गुः।

ल्प—ल्+प=ल्प—अल्पः, कल्पः, जल्पनम्।

ल्भ—ल्+भ=ल्भ—प्रगल्भः।

श्च—श्+च=श्च—निश्चितम्, पश्चिमम्।

श्छ—श्+छ=श्छ—दुश्छेद्यः।

ष्क—ष्+क=ष्क—निष्कण्टकः, शुष्कः।

ष्ट—ष् + ट = ष्ट—निकृष्टम्, दृष्टिः, मुष्टिः।

ष्ठ—ष् + ठ = ष्ठ—कनिष्ठः, निष्ठा।

ष्प—ष् + प = ष्प—पुष्पम्।

ष्फ—ष् + फ = ष्फ—निष्फलता।

स्क—स् + क = स्क—यशस्करः, तिरस्कारः।

स्ख—स् + ख = स्ख—स्खलनम्।

स्त—स् + त = स्त—प्रस्तरः, हस्तः।

स्थ—स् + थ = स्थ—स्थितिः, स्थूलता।

स्प—स् + प = स्प—परस्परम्, वाचस्पतिः।

स्फ—स् + फ = स्फ—स्फटिकः, स्फीतिः।

---

## उदाहरणम्।

नाहङ्कारात् परो रिपुः। कज्जलेन हि दृष्टिः प्रसाध्यते। मुक्तेर्हि कारणं ज्ञानम्। ज्वराऽऽदौ लङ्घनं पथ्यम्। भस्मनि फुत्कारो न देयः। यादृशी भावना यस्य सिद्धिर्भवति तादृशी। सन्तोषमूलं हि सुखम्। महाजनो येन गतः स पन्थाः। सत्यं शिवं सुन्दरम्। शरीरं व्याधि-मन्दिरम्। बन्धुत्वं दुर्लभं रत्नम्। अशक्तस्तस्करः साधुः। भ्रातृभिः परस्परं सद्भावो रक्षणीयः।

## व्यञ्जनत्रयसंयोगः ।

क्ष्ण — क् + ष् + ण = क्ष्ण — तीक्ष्णता ।

क्ष्म — क् + ष् + म = क्ष्म — सूक्ष्मः, लक्ष्मीः ।

क्ष्य — क् + ष् + य = क्ष्य — लक्ष्यम् ।

ग्ध्व — ग् + ध् + व = ग्ध्व — जग्ध्वा ।

ङ्क्र — ङ् + क् + र = ङ्क्र — चङ्क्रमणम्, सङ्क्रामकः ।

ङ्क्ष — ङ् + क् + ष = ङ्क्ष — आकाङ्क्षा ।

ङ्ख्य — ङ् + ख् + य = ङ्ख्य — सङ्ख्या ।

च्छ्व — च् + छ् + व = च्छ्व — उच्छ्वासः ।

ज्ज्व — ज् + ज् + व = ज्ज्व — उज्ज्वलः ।

त्त्र — त् + त् + र = त्त्र — छत्त्रम्, पुत्त्रः ।

त्त्व — त् + त् + व = त्त्व — महत्त्वम्, सत्त्वम् ।

त्म्य -- त् + म् + य = त्म्य -- दौरात्म्यम्, माहात्म्यम् ।

न्त्र — न् + त् + र = न्त्र — निमन्त्रणम्, यन्त्रम् ।

न्त्व — न् + त् + व = न्त्व — सान्त्वना ।

न्द्र -- न् + द् + र = न्द्र -- चन्द्रः, सान्द्रः, इन्द्रियम् ।

न्द्व — न् + द् + व = न्द्व — द्वन्द्वम् ।

न्ध्य — न् + ध् + य = न्ध्य — वन्ध्या, सन्ध्या ।

न्न्य — न् + न् + य = न्न्य — सन्न्यासः ।

प्त्व—प्+त्+व=प्त्व—तप्त्वा।

म्प्र—म्+प्+र=म्प्र—साम्प्रतम्।

म्भ्र—म्+भ्+र=म्भ्र—सम्भ्रमः।

र्क्ष—र्+क्+ष=र्क्ष—असूर्क्षणम्, तार्क्ष्यः।

र्च्च—र्+च्+च=र्च्च—अर्च्चना, चर्च्चा।

र्च्छ—र्+च्+छ=र्च्छ—मूर्च्छना, मूर्च्छा।

र्ज्ज—र्+ज्+ज=र्ज्ज—आर्ज्जवम्, गर्ज्जितम्

र्त्त—र्+त्+त=र्त्त—आर्त्तः, शीतार्त्तः।

र्द्द—र्+द्+द=र्द्द—कर्द्दमः, निर्द्दंशः।

र्द्ध—र्+द्+ध=र्द्ध—अर्द्धम्, निर्द्धारणम्।

र्द्र—र्+द्+र=र्द्र—आर्द्रः।

र्म्म—र्+म्+म=र्म्म—धर्म्मः, वर्म्म, निर्म्मलम्।

र्य्य—र्+य्+य=र्य्य—आर्य्यः,कार्य्यम,धार्य्यम्

र्व्व—र्+व्+व=र्व्व—गर्व्वः, पर्व्वतः।

र्श्व—र्+श्+व=र्श्व—पारिपार्श्विकः।

ष्ट्र—ष्+ट्+र=ष्ट्र—उष्ट्रः, राष्ट्रम्।

ष्प्र—ष्+प्+र=ष्प्र—दुष्प्रवेशः, निष्प्रयोजनम्।

स्त्र—स्+त्+र=स्त्र—वस्त्रम्, शास्त्री।

स्थ्य—स्+थ्+य=स्थ्य—स्वास्थ्यम्।

### उदाहरणम् ।

महत्त्वस्य लक्षणं दया। उदिते चन्द्रे यास्यामि। शैशवे विद्यामुपार्ज्जयेत्। आतुरे करुणा कर्त्तव्या। यत् कर्त्तव्यं, तदद्यैव। कीर्त्तिर्यस्य स जीवति। नाऽऽर्द्रपादः शयीत। अहिंसा परमो धर्म्मः। शरदि नभो निर्म्मलं जायते। आर्य्यचरितमनुकरणीयम्। अनभ्यस्ता विद्या कार्य्यकाले न स्फुरति। स्वास्थ्यरक्षां विना देहपुष्टिः न जायते।

---

### व्यञ्जनचतुष्टयसंयोगः।

क्ष्य—र्+क्+ष्+य=र्क्ष्य—तार्क्ष्यः।

द्ध्न—र्+द्+ध्+न=र्द्ध्न—मूर्द्धा, मूर्द्ध्नि।

द्ध्व—र्+द्+ध्+व=र्द्ध्व—ऊर्द्ध्वम्।

म्म्य—र्+म्+म्+य=र्म्म्य—धर्म्म्यम्, हर्म्म्यम्।

---

### उदाहरणम्।

तार्क्ष्यो हि अहिमर्द्दनः। स्वभावः मूर्द्ध्नि वर्त्तते। ऊर्द्ध्वमुखम् अध्वा न गन्तव्यः। धर्म्म्येण वृत्तेन उपायाः फलन्ति।

## षष्ठः पाठः।

क्रोधं मा कार्षीः। नद्यादौ नैव सन्तरेः।
कालो हि दुरतिक्रमः। वाणिज्ये वर्द्धते लक्ष्मीः।
आलस्यं यत्नेन वर्ज्जयेत्। शठे शाठ्यं समाचरेत्।
पाप्मनः विरतो भवेत्। आत्मानं सततं रक्षेत्।
श्रेयांसि बहुविघ्नानि। चन्द्रे कलङ्को दृश्यते।

बिल्वे पक्के काकस्य किम्?

प्राणात्ययेऽपि न मिथ्या भाषेत।

वर्षासु नादेयं नीरं नाऽऽदेयम्।

ग्रीष्माऽऽगमे रविः खरतरो भवति।

मूर्खाः सदा दुःखम् अनुभवन्ति।

कूपोदकं ग्रीष्मे शीतलम् अनुभूयते।

पराऽऽत्मनः परं पदं गवेष्यताम्।

ईश्वरस्य माहात्म्यं सदैव कीर्त्तनीयम्।

सदुपायेन धनोपार्ज्जनं हि सुखाय भवति।

आशा हि परमं दुःखं, नैराश्यं परमं सुखम्।
पुत्रे यशसि तोये च नराणां पुण्यलक्षणम्।

## सप्तमः पाठः।

चत्वारः वेदाः। यथा,—ऋक्, यजुः, साम, अथर्वा च। ऋग्वेदस्य एकविंशतिः शाखाः। यजुषः शतं शाखाः। साम्नः सहस्रं शाखाः। अथर्वणश्च नव शाखाः।

पञ्च विषयाः। यथा—रूपं, रसः, गन्धः, शब्दः, स्पर्शः च। तत्र रूपं चक्षुषः विषयः, रसः जिह्वायाः, गन्धः नासिकायाः, शब्दः कर्णस्य, स्पर्शः त्वचः।

पञ्च बाणाः। तन्नामानि यथा,—सम्मोहनः, उन्मादनः, शोषणः, तापनः, स्तम्भनश्चेति।

समुद्राः सप्त। यथा,—लवणः, इक्षुः, सुरा, सर्पिः, दधि, दुग्धं, स्वादुजलः।

वाराः सप्त। यथा,—रविः, सोमः, मङ्गलः, बुधः, बृहस्पतिः, शुक्रः, शनैश्चरः इति। एते सप्त राहुः केतुश्चेति नव ग्रहाः।

अष्टौ वसवः। यथा,—धरः, ध्रुवः, सोमः, विष्णुः, अनिलः, अनलः, प्रत्यूषः, प्रभासश्च।

इन्द्रियाणि दशसङ्ख्यकानि। तत्र चक्षुः,

कर्णः, नासिका, जिह्वा, त्वक् च इति पञ्च ज्ञानेन्द्रियाणि। मनोऽपि ज्ञानेन्द्रियम् इति केचित्। हस्तौ, पादौ, पायुः, उपस्थः, वाक् चेति पञ्च कर्म्मेन्द्रियाणि।

तत्र दर्शनेन्द्रियं चक्षुः, श्रवणेन्द्रियं कर्णः, घ्राणेन्द्रियं नासिका, रसनेन्द्रियं जिह्वा, स्पर्शेन्द्रियं त्वक्।

एकचक्षुर्हीनः काणः, चक्षुर्द्वयविहीनः अन्धः, श्रवणशक्तिहीनः बधिरः, घ्राणहीनः विघ्रः विग्रो वा, विकलैकपात् खञ्जः, विकलपादद्वयः पङ्गुः, उन्नतपृष्ठः कुब्जः, स्थूलोदरः लम्बोदरः तुन्दिलः वा।

मासाश्च द्वादश। यथा,—वैशाखः, ज्यैष्ठः, आषाढ़ः, श्रावणः, भाद्रः, आश्विनः, कार्त्तिकः, अग्रहायणः मार्गशीर्षो वा, पौषः, माघः, फाल्गुनः, चैत्रश्चेति।

राशयः द्वादश। यथा,—मेषः, वृषः, मिथुनम्, कर्कटः, सिंहः, कन्या, तुला, वृश्चिकः, धनुः, मकरः, कुम्भः, मीनः इति। ते च वैशाखाऽऽदिषु क्रमेण रविसञ्चारविषयाः।

यथा,—वैशाखे मेषः, ज्यैष्ठे वृषः, इत्यादिक्रमेण बोद्धव्याः।

तिथयः पञ्चदश। यथा,—प्रतिपत्, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्द्दशी, पूर्णिमा अमावस्या वा।

सप्तविंशतिः नक्षत्राणि। यथा,—अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशिराः, आर्द्रा, पुनर्व्वसुः, पुष्या, अश्लेषा, मघा, पूर्वफल्गुनी, उत्तरफल्गुनी, हस्ता, चित्रा, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूला, पूर्वाषाढ़ा, उत्तराषाढ़ा अभिजित् वा, श्रवणा, धनिष्ठा, शतभिषा, पूर्वभाद्रपदः, उत्तरभाद्रपदः, रेवती इत्येतानि।

---

## अष्टमः पाठः।

### दिङ्निर्णयः।

दिशो हि दश। यस्यां सूर्य्यः उदेति, सा पूर्व्वा प्राची वा। तां पूर्व्वां दिशम् अभिमुखी-

कृत्य यदि कश्चित् दण्डायमानो भवति, तदा तस्य दक्षिणः हस्तः यस्यां दिशि तिष्ठति, सा दक्षिणा अवाची वा। वामस्तु यस्यां वर्त्तते, सा उत्तरा उदीची वा दिक्। तस्य जनस्य पश्चाद्वर्त्तिनी दिक् पश्चिमा प्रतीची वा।

पूर्व-दक्षिणयोः मध्यवर्त्तिनी या दिक्, सा आग्नेयी, अग्निकोणश्च। एवं दक्षिण-पश्चिमयोः मध्यस्था नैरृती, पश्चिमोत्तरमध्यस्था वायवी, एवम् उत्तर-पूर्वमध्यस्था ऐशानी दिक्। मस्तकोपरिस्था या, सा ऊर्द्ध्वा, पदतलस्था अधः। एवं दिशो दश। तासु पूर्व-दक्षिण-पश्चिमोत्तराः इति चतस्रो दिशः। अग्नि-नैरृत-वाय्वीशानसंज्ञाः चतस्रः विदिशः कोणाश्च।

---

## नवमः पाठः।

### कालपरिमाणम्।

अनुपलः—नेत्र-निमीलनपरिमितः अति-सूक्ष्मकालः। अनुपलानां षष्ट्या एकः विपलः। विपलानाञ्च षष्ट्या एकं पलम्। तस्यापरं

नाम विघटिका। पलानां षष्ठ्या एकः दण्डः। सार्द्धसप्तभिः दण्डैः एकः प्रहरः यामो वा। अष्टाभिश्च प्रहरैः अहोरात्रः।

सप्तभिः दिवसैः सप्ताहः कथ्यते। पञ्चदशभिः अहोरात्रैः एकः पक्षः।

पक्षश्च द्विविधः, शुक्लः ; कृष्णश्चेति। यस्मिन् पक्षे चन्द्रकला वर्द्धते, स शुक्लः, यत्र ह्रसति, स कृष्णः। द्वाभ्यां पक्षाभ्याम् एकः मासः। शुक्ल-प्रतिपदादिदर्शान्तः त्रिंशत्तिथ्यात्मकः चान्द्रः मासः ; दिनानां त्रिंशता च सौरः मासः।

द्वाभ्यां मासाभ्याम् एकः ऋतुः। ऋतवः षट्सङ्ख्यकाः। यथा,—अग्रहायण-पौषौ हेमन्तः। माघ-फाल्गुनौ शिशिरः। चैत्र-वैशाखौ वसन्तः। ज्यैष्ठाऽऽषाढ़ौ ग्रीष्मः। श्रावण-भाद्रौ वर्षाः। आश्विन-कार्त्तिकौ शरत्। केचित्तु वैशाख-ज्यैष्ठौ ग्रीष्मः इत्यादिक्रमेण गणयन्ति। मतान्तरे तु— कार्त्तिकाग्रहायण-पौष-माघाः शीतः। फाल्गुन-चैत्र-वैशाख-ज्यैष्ठाः ग्रीष्मः। आषाढ़-श्रावण-भाद्राऽऽश्विनाः वर्षाः, इति त्रिविधाः ऋतवः। द्विविधश्च यथा,—कार्त्तिकाऽऽदयः षट् मासाः

शीतर्त्तुः। वैशाखाऽऽदयः षट् मासाः ग्रीष्मः इति।

षड्भिश्च मासैः एकम् अयनम्। माघ-फाल्गुन-चैत्र-वैशाख-ज्यैष्ठाऽऽषाढैः षड्भिः मासैः सूर्य्यस्य उत्तरम् अयनम् (उत्तरायणम्)। श्रावण-भाद्राऽऽश्विन-कार्त्तिकाग्रहायण-पौषैः षड्भिश्च दक्षिणम् अयनम् ( दक्षिणायनम् )।

उक्तैश्च द्वादशभिः मासैः एको वत्सरो भवति।

---

## दशमः पाठः।

---

### शश-कूर्म्मयोः।

"दर्पेण पतनं नूनं भविष्यति भविष्यति।"

एकः शशकः केनचित् कच्छपेन सह मैत्रीम् अकरोत्। शशकः उत्प्लुत्य उत्प्लुत्य द्रुतं गच्छति, कूर्मस्तु शनैः शनैः व्रजति; तेन च शशकः सर्वदा कच्छपम् अभिलक्ष्य उपहसति। असौ कच्छपः एकदा शशकस्य उपहासम् आकर्ण्य सस्मितम् आह,—"भ्रातः! अलं कथया, दिवसमेकं स्थिरीकुरु; तस्मिन् दिने स्थानमेकं उद्दिश्यम्

आवां गमिष्यावः। कः तत्र प्रथमं यातुं शक्नुयात्, तत्प्रत्यक्षं भविष्यति"।

शशकः तत् श्रुत्वा आह,—"अलं दिनान्तरेण, अद्यैव भवतु। तदेतत् प्रत्यक्षीभूतं भविष्यति, कतरस्तावत् आवयोः अधिकं चलितुं समर्थः" इति।

इत्यवधार्य्य शुष्कतरुतलमेकं लक्ष्यीकृत्य तौ द्वौ अपि युगपत् एकतः चलितुम् आरब्धवन्तौ। कूर्मः धीरगामी, किन्तु सः अविश्रान्तं चचाल। शशकस्तु अतिद्रुतं धावति, ततः जाताभिमानः स इदं व्यचिन्तयत् यत्,—"कच्छपः यादृगेव द्रुतं चलतु, अहन्तु तत्पूर्वमेव तत्स्थानं प्राप्स्यामि"।

इति निश्चित्य शशकः कियद्दूरं द्रुतं गत्वा क्वचित् वृक्षतले शीतलच्छायायां निद्रितः। ततः उत्थाय यावत् असौ निर्णीतस्थानं गतवान्, तावत् तत्र उपविष्टं कच्छपं दृष्ट्वा परं विस्मयम् अवाप।



शशकः *** परं विस्मयम् अवाप।

उपदेश: ;—य: हि किमपि कार्य्यं समारभ्य न विरमति, स कच्छपवत् स्वल्पेनापि कालेन तस्य अन्तं गच्छति, अत: अविश्रान्तम् अध्यवसाय: कर्त्तव्य इति।

---

## एकादश: पाठ:।

---

### सिंह-मूषिकयो:।

"उपकृता: क्षुद्रा अपि प्रत्यपकर्त्तुं शक्नुवन्ति"।

कस्मिंश्चित् पर्वते विकटदंष्ट्रो नाम कश्चित् सिंह: प्रतिवसति स्म। स च एकदा आतपक्लिष्ट: तस्यैव गुहायां सुखेन निद्रां ययौ। तत्र च एक: मूषिक: अपि आसीत्। स इतस्तत: विचरन् दैवयोगात् यावत् तस्य सिंहस्य आस्यसमीपं गत:, तावदेव असौ तच्छ्वासवायुना आकृष्ट: तस्यैव नासिकारन्ध्रं प्रविवेश। सिंहस्तु तत्-क्षणमेव उत्थाय यावत् क्षुवति, तावत् मूषिक: वहिर्निःसृत: ; दृष्ट्वा च तम् अतीव क्रुद्ध: सन् नखराऽऽघातेन हन्तुम् अचेष्टत।

अथैनं नखरप्रहारेण विनाशयितुम् उद्यतं दृष्ट्वा मूषिक: भयेन कृताञ्जलि: सविनयम् इदम् आह,—"देव! भवान् पशूनां राजा, अहन्तु

क्षुद्रः प्राणी ; मादृशानां क्षुद्रजन्तूनां विनाशे भवतः एव कलङ्कः भविष्यति। विशेषतश्च नाहम् अपराधी ;



मूषिकः *** नाहम अपराधी।

भवतः एव श्वासवायुना समाकृष्टः नासिकां प्रविष्टः"। सिंहः तद्वचनं श्रुत्वा दयापरवशः सन् मूषिकं तत्याज।

अथ एकदा असौ सिंहः अरण्यानीमध्ये आहार्य्यान्वेषणार्थं परिभ्रमन् कस्यचित् व्याधस्य जालेन निबद्धो बभूव। सिंहस्तु बहुशश्चेष्टमानोऽपि यदा तत् जालं छेत्तुं न शशाक, तदा आत्मत्राणासमर्थतया महाक्रुद्धः सन् समग्रम् अरण्यं कम्पयन्निव गर्ज्जितुम् आरेभे।

असौ विकटदंष्ट्रः सिंहः प्राक् यस्य मूषिकस्य प्राणरक्षां चकार, स तदा तत्रैव वनोद्देशे विचरन् आत्मनः प्राणदातुः स्वरम् अभिज्ञाय सत्वरं तत्र आजगाम ; आगत्य च कृतोपकारम् अनुस्मरन् अविलम्बेन स्वदशनाग्रैः तस्य जालं चिच्छेद। ततश्च सिंहो जालमुक्तः स्वच्छन्दं स्वस्थानं प्रस्थितः।

उपदेशः ;—अभिसन्धिं विहाय यदि दया क्रियते, तदा सा निष्फला न भवति।

---

## द्वादशः पाठः।

---

### स्वास्थ्यपालनविधिः।

धर्म्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः।
तान् निघ्नता किं न हतं, रक्षता किं न रक्षितम् ? ॥ १ ॥
ब्राह्मे मुहूर्त्ते बुध्येत स्वस्थो रक्षार्थमायुषः।
आयुष्यमुषसि प्रोक्तं मलाऽऽदीनां विसर्ज्जनम् ॥ २ ॥
दन्तस्य धावनं कृत्वा व्यायाममपि सञ्चरेत्।
शक्त्यर्द्धेन च कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥ ३ ॥
कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते।
शक्त्यर्द्धं तं विजानीयात् यावदुच्छ्वासमेव च ॥ ४ ॥
प्रातराशश्च कर्त्तव्यः पाठाभ्यासो यथाक्रमम्।
ततः स्नानं प्रकुर्वीत भोजनञ्च ततश्चरेत् ॥ ५ ॥

प्रातराशे त्वजीर्णे तु सायमाशो न दुष्यति ।
सायमाशे त्वजीर्णे तु प्रातर्भुक्तं विषोपमम् ॥ ६ ॥
अध्यशनं न कर्त्तव्यं न चापि गुरुभोजनम् ।
षड्रसान्वितस्वाद्वन्नं कदुष्णं शुचि भोजयेत् ॥ ७ ॥
अर्द्धन्तु पूरयेदन्नैः तदर्द्धन्तु जलेन वै ।
वायोः सञ्चरणार्थाय तुरीयमवशेषयेत् ॥ ८ ॥
आदौ लवण-तिक्तौ च मध्ये कटु-कषायकौ ।
अम्लेन पूरणं कुर्य्यात् मधुरेण समापयेत् ॥ ९ ॥
फलानां भोजनं शस्तं भोजनान्तेऽपराह्णके ।
व्यायामो वायुसेवा च सायाह्नेऽपि प्रशस्यते ॥ १० ॥

---

## त्रयोदशः पाठः ।

---

## सुभाषितानि ।

### विद्या ।

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्य्यत्वात् अनर्घ्यत्वात् अक्षयत्वाच्च सर्वदा ॥ १ ॥
ज्ञातिभिर्वण्ट्यते नैव, चौरेणापि न नीयते ।
दानेन न क्षयं याति, विद्यारत्नं महाधनम् ॥ २ ॥
विद्या ददाति विनयं, विनयात् याति पात्रताम् ।
पात्रत्वात् धनमाप्नोति, धनात् धर्म्मं ततः सुखम् ॥ ३ ॥
अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत् ॥ ४ ॥
विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ५ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ६ ॥
प्रथमे नार्ज्जिता विद्या, द्वितीये नार्ज्जितं धनम् ।
तृतीये नार्ज्जितं पुण्यं, चतुर्थे किं करिष्यति ? ॥ ७ ॥
पुस्तकस्था तु या विद्या, परहस्तगतं धनम् ।
कार्य्यकाले समुत्पन्ने न सा विद्या, न तद्धनम् ॥ ८ ॥

विद्याऽर्ज्जनोपायः ।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते ॥ ९ ॥

सत्यभाषिता ।

सत्यवाक्यं सदा ब्रूयात् न तु मिथ्या कदाचन ।
मिथ्यावादी सदा सर्वैः सर्वत्र परिभूयते ॥ १० ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्रात् हि सत्यमेवातिरिच्यते ॥ ११ ॥

नीतिः ।

मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ १२ ॥
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ १३ ॥
विषं चङ्क्रमणं रात्रौ, विषं व्याधिरवैद्यतः ।
दुरधीता विषं विद्या, अजीर्णे भोजनं विषम् ॥ १४ ॥

सत्सङ्गः ।

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ १५ ॥
हीयते हि मतिस्तात ! हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ १६ ॥

सदाचारः।

बालको यदि वा वृद्धो युवा वा गृहमागतः।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः॥ १७॥
परहिंसां परद्रव्यं परीवादं परस्य च।
परिहासं गुरोः स्थाने चापल्यं परिवर्ज्जयेत्॥ १८॥
गुरोर्यत्र परीवादः निन्दा वाऽपि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥ १९॥

उद्यमः।

कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वेषां मूर्द्ध्नि वा तिष्ठेत् विशीर्य्येत वनेऽथवा॥ २०॥
उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥ २१॥

वञ्चना, कृतघ्नता, विश्वासघातकता।

उपकारस्य विस्मर्त्ता कृतघ्नः, वञ्चनापरः।
वञ्चकः, कृतयाथार्थ्यः शठ इत्यभिधीयते॥ २२॥
सद्भावप्रतिपन्नानां वञ्चने का विदग्धता ?।
अङ्कमारुह्य सुप्तं तु हत्वा किं नाम पौरुषम् ?॥ २३॥
सेतुबन्धे समुद्रे च गङ्गासागरसङ्गमे।
ब्रह्महा मुच्यते पापात्, मित्रद्रोही न मुच्यते॥ २४॥
मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ॥ २५॥

दुर्ज्जनता।

दुर्ज्जनः परिहर्त्तव्यो विद्ययाऽलङ्कृतोऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ?॥ २६॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः।
मन्त्रौषधिवशः सर्पः, खलः केन निवार्य्यते ?॥ २७॥

# चतुर्दशः पाठः ।

## नाना ज्ञातव्यविषयाः ।

श्रोत्रियः ।

जन्मना ब्राह्मणो ज्ञेयः, संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं, त्रिभिः श्रोत्रिय उच्यते ॥ १ ॥

धर्म्माधिकरणम् ।

धर्मशास्त्रानुसारेण अर्थशास्त्रनिरूपणम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥ २ ॥

धर्म्माधिकारी ।

समः शत्रौ च मित्रे च सर्वशास्त्रे विशारदः ।
विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ॥ ३ ॥

त्रिविधस्य ऋणस्य शोधनविधिः ।

ऋणं देवस्य यागेन, ऋषीणां दानकर्म्मणा ।
सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ॥ ४ ॥

पञ्च पितरः ।

अन्नदाता भयत्राता यस्य कन्या विवाहिता ।
जनिता चोपनेता च पञ्चैते पितरः स्मृताः ॥ ५ ॥

बाणपुष्पाणि ।

अरविन्दमशोकञ्च शिरीषं चूतमुत्पलम् ।
पञ्चैतानि प्रकीर्त्त्यन्ते पञ्चबाणस्य सायकाः ॥ ६ ॥

षडङ्गानि ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः ।
छन्दसां विचितिश्चैव षडङ्गो वेद उच्यते ॥ ७ ॥

सप्त मातरः।

आत्ममाता गुरोः पत्नी ब्राह्मणी राजपत्निका।
गवी धात्री तथा पृथ्वी सप्तैता मातरः स्मृताः॥ ८॥

वर्षपर्वताः।

हिमवान् हेमकूटश्च निषधो मेरुरेव च।
श्वेतो नीलश्च शृङ्गी च सप्तैते वर्षपर्वताः॥ ९॥

कुलपर्वताः।

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः॥ १०॥

महाद्वीपाः।

जम्बुप्लक्षाऽऽह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज!।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः॥ ११॥

अष्टविभूतिः।

अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥ १२॥

द्वादश सूर्य्याः।

विवस्वानर्य्यमा पूषा त्वष्टा च सविता भगः।
धाता विधाता वरुणो मित्रः शक्रुरुक्रमः॥ १३॥

अष्टादश विद्याः।

सषड़ङ्गा चतुर्वेदी मीमांसा न्यायविस्तृतिः।
आयुर्वेदो धनुर्वेदो गान्धर्वमर्थशासनम्।
पुराणं धर्मशास्त्रञ्च विद्या अष्टादश स्मृताः॥ १४॥

ब्रह्मावर्त्तः।

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥ १५॥

आर्य्यावर्त्तः।

आ समुद्रात्तु वै पूर्व्वादा समुद्राच्च पश्चिमात्।
हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रचक्षते॥ १६॥

आर्य्यः।

कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताऽऽचारे स वा आर्य्य इति स्मृतः॥ १७॥

---

## पञ्चदशः पाठः।

### अथ कारकम्।

क्रियानिमित्तं कारकम्। कारकाणि षट्। यथा,—कर्त्ता, कर्म्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणञ्चेति।

कर्त्ता।

यः कार्य्यं करोति, स कर्त्ता। यथा,—रामः गच्छति। स च द्विविधः,—प्रयोज्यकर्त्ता, प्रयोजककर्त्ता च। प्रयोज्यकर्त्ता यथा,—रामः गच्छति इत्यादौ रामादिः। तमेव प्रयोज्य-कर्त्तारं यः कर्म्मणि नियोजयति स प्रयोजककर्त्ता। यथा,—श्यामः रामं गमयति इत्यादौ श्यामादिः।

कर्म्म।

कर्त्ता यत् क्रियते, तत् कर्म्म। यथा,—अन्नं पचति। कर्म त्रिविधं,—निर्व्वर्त्त्यं, विकार्य्यं, प्राप्यञ्चेति। तत्र निर्व्वर्त्त्यं नाम,—यत्र केवलं विकृतिवाचकशब्दस्य प्रयोगः। यथा,—कुण्डलं करोति। विकार्य्यं नाम,—यत्र प्रकृतिवाचकस्य विकृतिवाचकस्य च द्वयोरेव प्रयोगः। यथा,—सुवर्णं कुण्डलं करोति। यत्र तु प्रकृति-विकृतिभावो नास्ति, तत् प्राप्यम्। यथा,—सूर्य्यं पश्यति इत्यादि।

### करणम्।

येन च साधनेन कर्त्ता कार्य्यं निष्पादयति, तत् करणम्। यथा,—काष्ठेन अन्नं पचति। अत्र काष्ठं करणम्।

### सम्प्रदानम्।

यस्मै ददाति, तत् सम्प्रदानम्। यथा,—याचकाय धनं ददाति। अत्र याचकः सम्प्रदानम्।

### अपादानम्।

यस्मात् विभागः, भयं, नियमतो विद्याग्रहणं वा, तत् अपादानम्। क्रमेण यथा,—वृक्षात् पत्रं पतति। व्याघ्रात् बिभेति। गुरोः विद्यां गृह्णाति इत्यादि।

### अधिकरणम्।

आधारोऽधिकरणम्। स च त्रिविधः। यथा,—एकदेशः, अभिव्यापकः, विषयश्च। क्रमेण यथा,—वने वसति, वनैकदेश इत्यर्थः। तिलेषु तैलं, तिलान् व्याप्य इत्यर्थः। पुस्तके ज्ञानं, पुस्तकविषये इत्यर्थः।

---

## अथ विभक्तिः।

संख्या-कारकयोः बोधिका विभक्तिः। सा द्विविधा।—नामविभक्तिः, धातुविभक्तिश्च। प्रथमाऽऽदिसप्तमीपर्य्यन्ताः सप्त नामविभक्तयः। तत्र उक्ते कारके प्रथमा, कर्मणि द्वितीया, करणे कर्त्तरि च तृतीया, सम्प्रदाने चतुर्थी, अपादाने पञ्चमी, सम्बन्धे षष्ठी, अधिकरणे च सप्तमी विभक्तिः।

## अथ समासः ।

समर्थानामेकपदीभावः समासः। स च प्रधानतः षड्विधः। यथा,—अव्ययीभावः, तत्पुरुषः, कर्मधारयः, द्विगुः, बहुव्रीहिः, द्वन्द्वश्च ।

### अव्ययीभावः ।

अव्ययपूर्व्वपदः पूर्व्वपदार्थप्रधानः समासः अव्ययीभावः। यथा,—उपकुम्भम्, यथारुचि इत्यादि ।

### तत्पुरुषः ।

द्वितीयाऽऽदिविभक्तियुक्तपूर्व्वपदः उत्तरपदार्थप्रधानः समासः तत्पुरुषः। क्रमेण यथा,—कष्टाऽऽश्रितः, करलूनः, विप्रदत्तः, वृक्षपतितः, राजपुत्त्रः, गृहस्थितः इत्यादि ।

### कर्म्मधारयः ।

उत्तरपदप्रधानः समानविभक्तियुक्तः विशेष्यविशेषणभावमापन्नः समासः कर्म्मधारयः। यथा,—नीलोत्पलम् ।

### द्विगुः ।

कर्म्मधारय एव संख्यावाचकपूर्व्वपदो द्विगुसमासः। स च समाहार-तद्धितार्थोत्तरपदत्वेन त्रिविधः। क्रमेण यथा,—पञ्चमूली, पञ्चगुः, पञ्चगवधनः ।

### बहुव्रीहिः ।

अन्यपदार्थप्रधानः समासः बहुव्रीहिः। यथा,—कृतप्रणामः पुरुषः ।

### द्वन्द्वः ।

समासान्तर्गतसर्व्वपदार्थप्रधानः समासः द्वन्द्वः। यथा,—रामलक्ष्मणौ, करचरणम् इत्यादि ।

समासोऽयं ग्रन्थः ।

# संस्कृतशिक्षामञ्जरी

## द्वितीयभागः ।

पण्डितकुलपतिना-

बि, ए, उपाधिधारिणा-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

सङ्कलितः ।

तदात्मजाभ्यां—

पण्डित श्रीआशुबोध-विद्याभूषण-

पण्डित श्रीनित्यबोध-विद्यारत्नाभ्यां

संस्कृतः परिवर्द्धितः प्रकाशितश्च ।

सप्तमसंस्करणम् ।

कलिकातानगर्य्यां

गोवर्द्धनयन्त्रे

मुद्रितः ।

ई १९२० ।



मूल्यम् [illegible] ।

# संस्कृतशिक्षामञ्जरी

## द्वितीयभागः।

[illegible]

वि, ए, उपाधिधारिणा-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

सङ्कलितः।

तदात्मजाभ्यां-

पण्डित श्रीआशुबोध-विद्याभूषण-

पण्डित श्रीनित्यबोध-विद्यारत्नाभ्यां

संस्कृतः परिवर्द्धितः प्रकाशितश्च

नवमसंस्करणम्।

कलिकातानगर्य्यां

गोवर्द्धनयन्त्रे

मुद्रितः।

ई १९२०।

প্রকাশক — { পণ্ডিত শ্রীআশুবোধ বিদ্যাভূষণ
ও
পণ্ডিত শ্রীনিত্যবোধ বিদ্যারত্ন।

প্রাপ্তিস্থান — { ২নং রমানাথ মজুমদার ষ্ট্রীট,
পোঃ, আঃ, আমহার্ষ্ট ষ্ট্রীট, কলিকাতা।

PRINTED BY GOBARDHAN PAN
*209, Cornwallis Street, Calcutta.*

# संस्कृतशिक्षामञ्जरी



## द्वितीयभागः ।



### मङ्गलपाठः ।

सर्व्वशक्तिमतो जगदीश्वरस्य कृपया इदं जगत् शक्तिमद्भवति। यस्य शक्त्या सूर्य्यः करैः रसान् गृहीत्वा पुनरस्माकं जीवनाय ददाति; तैश्च शस्यादिकमुत्पाद्य अस्मान् रक्षति च। यस्य च शक्त्या वायुः श्वासप्रश्वासादिरूपेण अस्माकं जीवनाय उपकरोति। यस्य चाऽऽदेशेन अनलोऽस्माकं देहान्तर्निविष्टः सन् भुक्तान्यन्नादीनि रसशोणिताऽऽदिरूपेण परिणामयति। यस्य कृपया च क्षितिः सर्वंसहा सती अस्मान् धारयति। यस्य शक्त्या च आकाशस्तु पदार्थाऽऽघातजनितं शब्दं जनयति। यस्य भूमण्डलस्य वितानरूपे नभोमण्डले चन्द्रमसं तारकाराजिञ्च यथायथं

विन्यस्य स्वस्य शिल्पनैपुण्यं शश्वत्प्रकटयति। यश्च जननात् प्रागेव प्राणिनां रक्षणाय मातृस्तनेषु क्षीरं, पितोर्हृदये स्नेहञ्च सदैव ददाति। यश्च शश्वत् अशेषतो विपद्गणात् अस्मान् रक्षति, तञ्च सर्वशक्तिमन्तं भगवन्तं वयं वन्दामहे।

सन्ध्याकाले आकाशमण्डलं निर्मलं लोहितञ्च जायते। तस्मिन् ब्राह्मणाः सन्ध्याम् उपासते। सर्वे जीविनो जगदीशस्य परिचय ददति। केचन वचसा, केचन गानेन, केचन विद्यया, केचन पुष्पेण, केचन सत्सङ्गेन इति।

ज्ञानेन विना जगद्रक्षितारं परमेश्वरं निर्णेतुं केनापि न शक्यते। ज्ञानन्तु विद्योपार्जनं विना न सम्भवति ; अतः विद्याचर्चा तु सर्वदैव करणीया। विद्यारत्नस्य मणिमुक्ताऽऽदिभिः कदाचिदपि न साम्यम्। मणिमुक्ताऽऽदिभिः विद्यालाभस्तु कदाचिदपि न सम्भवति, परन्तु विद्यया मणिमुक्ताऽऽदीनां लाभः अनायाससाध्य एव। मणिमुक्ताऽऽदीनान्तु रक्षणे तस्कराऽऽदिभ्यो भयं, नाशे व्यये च दुःखम्; महामूल्यविद्यारत्नस्य न नाशः सम्भवति, परन्तु

व्यये च वृद्धिमापद्यते। अपि च, विद्या तु केवलं न ज्ञानं, विनयं यशश्च ददाति। विनयेन नरः स्नेहभाजनं जायते, यशसा चिरं जीवति च। विद्यासमा जगति कोऽपि बन्धुर्नास्ति। अतः बाल्यादेव विद्योपार्जनं श्रेयः।

---

प्रथमः पाठः।

अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः सदाफलः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोरधः कदाचित् करालमुखो नाम मकरः समुद्र-सलिलात् निष्क्रम्य सुकोमलवालुकासनाथे तीरो-पान्ते न्यविशत। ततश्च रक्तमुखेन स प्रोक्तः,— "भोः! भवान् समभ्यागतोऽतिथिः, तद्भक्षयतु मया दत्तानि अमृततुल्यानि जम्बूफलानि। उक्तञ्च,—

अपूजितोऽतिथिर्यस्य गृहाद् याति विनिःश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः॥"

एवमुक्त्वा तस्मै जम्बूफलानि ददौ । सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनम् अगात् । एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्यै प्रयच्छति । अथ अन्यतमे दिवसे तया स पृष्टः,—"नाथ ! क्व एवंविधानि अमृतकल्पानि फलानि प्राप्तानि ?" स आह,—"भद्रे ! ममास्ति परमसुहृत् रक्तमुखो नाम वानरः । स प्रीतिपूर्वम् इमानि फलानि प्रयच्छति" ।

ततोऽसौ भार्य्यया सह सुहृत्समीपम् अगात् । मकरी फलानि तं ययाचे । वानरः स्मितं कृत्वा ताम् अवादीत्,—"किमिति फलानि आदातुम् इहाऽऽगतोऽसि" ? अतोऽहं ब्रवीमि,—

स्निग्धात् याच्ञा न कर्त्तव्या प्राणव्ययेऽपि पण्डितैः ।
याच्ञालाभे हि बन्धुत्वं मानश्चैव विनश्यति ॥

द्वितीयः पाठः।

अस्ति कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः। स कदाचित् दायादैः उद्वेजितः तस्मात् निष्क्रान्तः। अथ तेन चिन्तितं यत्,—"कथं तेषां दायादानां मया प्रत्यपकारः कर्त्तव्यः?" स एवं चिन्तयन् विले प्रविशन्तं कृष्णसर्पम् अपश्यत्। तं दृष्ट्वा भूयोऽपि अचिन्तयत् यत्,—"एनं तत्र कूपे नीत्वा सकलदायादानाम् उच्छेदं करिष्यामि। उक्तञ्च,—

शत्रुमुन्मूलयेत् प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा।
व्यथाकरं सुखार्थाय कण्टकेनैव कण्टकम्"॥

एवं स विभाव्य विलद्वारं गत्वा तम् आहूतवान्,—"एहि एहि प्रियदर्शन! एहि"। तत् श्रुत्वा सर्पः चिन्तयामास,—"य एष माम् आह्वयति, स स्वजातीयो न भवति, यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्त्यलोके सङ्गतिः नास्ति। तदत्र एव दुर्गे स्थितः तावद् वेद्मि, कोऽयं भवति। उक्तञ्च,—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः।
न तेन सङ्गतिं कुर्य्यादित्युवाच बृहस्पतिः॥

कदाचित् कोऽपि मन्त्रवाद्यौषधचतुरो वा माम् आहूय बन्धने क्षिपति । अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद् भक्षणार्थं माम् आह्वयति" । आह च,—"भोः ! को भवान्?" स आह,—"अहं गङ्गदत्तो नाम मण्डूकाधिपतिः, त्वत्सकाशे मैत्र्यर्थम् अभ्यागतः" । तत् श्रुत्वा सर्पः आह,—"भोः ! अश्रद्धेयम् एतत् यत्, तृणानां वह्निना सह सङ्गमः । उक्तञ्च,—

यो यस्य जायते बध्यः स स्वप्नेऽपि कथञ्चन ।
न तत्समीपमभ्येति तत् किमेवं प्रजल्पसि ?" ॥

"योऽमित्रं कुरुते मित्रं वीर्य्याभ्यधिकमात्मनः ।
स करोति न सन्देहः स्वयं हि विषभक्षणम्" ।

---

तृतीयः पाठः ।

---

अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति स्म । स च सर्वैर्जलचरैः पक्षिभिर्मिलित्वा पक्षिराज्ये अभिषिक्तः । यतः,—

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥

अपरञ्च,—

प्रजां संरक्षति नृपः सा वर्द्धयति पार्थिवम् ।
वर्द्धनाद्रक्षणं श्रेयस्तदभावे सदप्यसत् ॥

एकदाऽसौ राजहंसः सुविस्तीर्णकमलपर्य्यङ्के सुखाऽऽसीनः परिवारपरिवृतः तिष्ठति । ततः कुतोऽपि देशात् आगत्य दीर्घमुखो नाम वकः प्रणम्य उपविष्टः । राजा उवाच,—"दीर्घमुख ! देशान्तरात् आगतोऽसि, वार्त्तां कथय" । स ब्रूते,— "देव ! अस्ति महती वार्त्ता । ताम् आख्यातुकामः

एव सत्वरम् आगतोऽहं, श्रूयताम् ।—अस्ति जम्बूद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्य अनुचरैः अहं दग्धारण्यमध्ये चरन् अवलोकितः, पृष्टश्च,—'कः त्वम् ? कुतः समागतोऽसि ?' ततो मया उक्तम्,—'अहं कर्पूरद्वीपस्य राज्ञो हिरण्यगर्भस्य अनुचरः । कौतुकात् देशान्तरं द्रष्टुम् आगतोऽस्मि' । तत् श्रुत्वा पक्षिभिः उक्तं,—'तत्र कीदृशो देशः ? राजा कीदृशो वा ?' ततो मया उक्तम्,—'आः ! किमेवम् उच्यते ? महदन्तरम् यतः कर्पूरद्वीपः स्वर्गैकदेशः । राजा च द्वितीयः स्वर्गपतिः । कथं वर्णयितुं शक्यते ? अत्र मरुस्थले पतिता यूयं किं कुरुथ ? आगच्छत अस्मद्देशे । यतः,—

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते ? ॥

अन्यच्च,—

हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते' ॥

ततः मद्वचनम् आकर्ण्य पक्षिणः सकोपा बभूवुः । तथा चोक्तम्,—

"पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय, न शान्तये ॥

अन्यच्च,—

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याज्ञान् स्थानभ्रष्टा ययुः खगाः ॥"

राजा उवाच,—"कथमेतत् ?" दीर्घमुखः कथयति,—"अस्ति नर्मदातीरे पर्वतोपत्यकायां विशालः शाल्मलीतरुः। तत्र निर्मितनीड़े पक्षिणः सुखेन वर्षासु अपि निवसन्ति। अथ नीलपटलैः इव जलधरपटलैः आवृते नभस्तले धारासारैः महती वृष्टिः बभूव। ततो वानरान् तरुतलेऽवस्थितान् शीतार्त्तान् कम्पमानान् अवलोक्य पक्षिभिः उक्तं,—'भो भो वानराः ! श्रूयताम्,—

अस्माभिर्निर्मिता नीड़ाश्चञ्चुमात्राऽऽहृतैस्तृणैः ।
हस्तपादाऽऽदिसंयुक्ता यूयं किमवसीदत ?' ॥

अनन्तरं शान्ते पानीयवर्षे तैः वानरैः वृक्षम् आरुह्य सर्वे नीड़ा भग्नाः। तेषां पक्षिणाम् अण्डानि च अधःपातितानि। अतस्ते ऊचुः,— 'विद्वानेवोपदेष्टव्यः' इत्यादि"। राजा उवाच,—

"ततः किमभूत् ?" दीर्घमुखः कथयति,—"ततः पक्षिभिः कोपादुक्तं,—'केन असौ राजहंसः कृतः राजा ?' ततो मया उपजातकोपेन उक्तम्,—'अयं ते मयूरः केन राजा कृतः ?' तत् श्रुत्वा ते पक्षिणो मां हन्तुम् उद्यताः ; ततो मया अपि सुविक्रमो दर्शितः" । राजा विहस्य आह,—

"आत्मनश्च परेषाञ्च यः समीक्ष्य बलाबलम् ।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः" ॥

---

## चतुर्थः पाठः ।

अस्ति हस्तिनापुरे विलासो नाम रजकः । तस्य गर्दभोऽतिभारवहनात् दुर्बलो मुमूर्षुः अभवत् । ततः तेन रजकेन असौ व्याघ्रचर्मणा प्रच्छाद्य अरण्यसमीपे शस्यक्षेत्रे मोचितः । ततो दूरात् अवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः पलायन्ते । अथ केनापि शस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुःकाण्डं सज्जीकृत्य अवनतकायेन एकान्ते स्थितम् । ततस्तञ्च दूरे दृष्ट्वा

गर्दभः, पुष्टाङ्गो गर्दभोऽयमिति मत्वा शब्दं कुर्वाणः तदभिमुखं धावितः। ततस्तेन शस्यरक्षकेण गर्दभोऽयमिति ज्ञात्वा लीलया एव व्यापादितः। अतोऽहं ब्रवीमि,—

यः स्वभावो हि यस्य स्यात् तस्य स दुरतिक्रमः।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम्?।

---

पञ्चमः पाठः।

---

अस्ति श्रीपर्वतमध्ये ब्रह्मपुराऽऽख्यं नगरम्। तत्र शैलशिखरे घण्टाकर्णो नाम राक्षसः प्रतिवसति, इति जनप्रवादः श्रूयते। एकदा घण्टाम् आदाय पलायमानः कश्चित् चौरो व्याघ्रेण व्यापादितः, तत्पाणिपतिता घण्टा वानरैः प्राप्ता। ते वानराः तां घण्टाम् अनुक्षणं वादयन्ति। ततो नगरजनैः मनुष्यः खादितो दृष्टः, प्रतिक्षणं घण्टारवश्च श्रूयते। अनन्तरं घण्टाकर्णः कुपितो मनुष्यान् खादति, घण्टाञ्च वादयति, इति श्रुत्वा जनाः सर्वे नगरात्

पलायिताः । ततः करालाऽऽख्यया कामिन्या विमृष्य मर्कटा घण्टां वादयन्ति, स्वयं विज्ञाय राजा विज्ञापितः,—"देव ! यदि कियद्धनोपचयः क्रियते, तदाऽहम् एनं घण्टाकर्णं साधयामि"। ततो राज्ञा तुष्टेन तस्यै धनं दत्तम् । करालया कामिन्या च मण्डलं कृत्वा तत्र गणेशाऽऽदि-गौरवं दर्शयित्वा स्वयं वानरप्रियफलानि आदाय वनं प्रविश्य फलानि आस्तीर्णानि । ततो घण्टां परित्यज्य वानराः फलाऽऽसक्ता बभूवुः । कामिनी च घण्टां गृहीत्वा नगरमागता सकललोकपूज्या-ऽभवत् । अतोऽहं ब्रवीमि,—

विमृष्य सर्वकर्माणि कुरुते हि विचक्षणः ।
विमृष्यकारी सर्वत्र प्राप्नुयादात्मगौरवम् ॥

---

षष्ठः पाठः।

अस्ति दाक्षिणात्ये जनपदे मिथिलारोप्यं नाम नगरम्। तस्य समीपस्थः अनेकशाखा-सनाथः अतिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति। तत्र च मेघवर्णो नाम वायसराजः अनेककाक-परिवारः प्रतिवसति स्म। स तत्र विहितदुर्ग-रचनः सपरिजनः कालं नयति स्म। तथा अन्यः अरिमर्दनो नाम उलूकराजः असंख्योलूक-परिवारो गिरिगुहादुर्गाऽऽश्रयः प्रतिवसति स्म। स च रात्रौ अभ्येत्य सदा एव तस्य न्यग्रो-धस्य समन्तात् परिभ्रमति। अथ उलूकराजः पूर्व-विरोधवशात् यं कञ्चित् वायसं समासादयति, तं व्यापाद्य गच्छति। एवं नित्याभिगमनात् शनैः शनैः तत् न्यग्रोधपादपदुर्गं तेन समन्तात् निर्वायसं कृतम्; अथवा भवति एवम्।—

उक्तञ्च यतः,—

"य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगञ्चाऽऽलस्यसंयुक्तः स शनैस्तेन हन्यते॥
जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते"॥

अथ अन्येद्युः स वायसराजः सर्वान् वायस-सचिवान् आहूय प्रोवाच,—"भोः! उल्कटः तावत् अस्माकं शत्रुः उद्यमसम्पन्नश्च, कालवशात् नित्यमेव निशाऽऽगमे समेत्य अस्मत्पक्षकदनं करोति। तत् कथमस्य प्रतिविधानम्? वयं तावद् रात्रौ न पश्यामः; न च तस्य दुर्गं विजानीमः, येन दिवा गत्वा प्रहरामः। तत् अत्र विषये किं युज्यते, सन्धिविग्रहयानाऽऽसन-संश्रयद्वैधीभावानाम् एकतमस्य क्रियमाणस्य? तद्विचार्य्य शीघ्रं कथयन्तु भवन्तः"। अथ ते प्रोचुः,—"युक्तम् अभिहितं देवेन, यत् एष प्रश्नः कृतः। उक्तञ्च,—

'असहायः समर्थोऽपि तेजस्वी किं करिष्यति?।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति॥
वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्'?॥ इति'

---

सप्तम: पाठ: ।

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सर: । तत्र चिरात् सङ्कटविकटनामानौ हंसौ निवसत: । तयोर्मित्रं कम्बुग्रीवनामा कूर्म: प्रतिवसति । अथ एकदा धीवरै: आगत्य तत्रोक्तं यत्,—"अत्र अस्माभि: अद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्या:"। तदाकर्ण्य कूर्मो हंसौ आह,—"सुहृदौ ! श्रुतोऽयं धीवराऽऽलाप: ? अधुना किं मया कर्त्तव्यम् ?" हंसौ आहतु:,—"ज्ञायतां तावत्, पश्चात् यदुचितं, तत् कर्त्तव्यम्"। कूर्मो ब्रूते,—"मा एवम् ; यतो दृष्टव्यतिकरोऽहमत्र"। तौ आहतु:,—"कथमेतत् ?" कूर्म: कथयति,—"पुरा एतस्मिन् एव सरसि एवंविधेषु एव धीवरेषु उपस्थितेषु मत्स्यत्रयेण आलोचितम्। तत्र अनागतविधाता नाम एको मत्स्य: आसीत् । तेनोक्तम्,—'अहं तावत् जलाशयान्तरं गच्छामि' इत्युक्त्वा स ह्रदान्तरं गत: । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येन अभिहितं,—"भविष्यदर्थे प्रमाणाभावात् कुत्र मया गन्तव्यम् ? तदुत्पन्ने कार्य्ये यथाकार्य्यम् अनुष्ठेयम्'। यद्भविष्य: आह,—

'पितृपितामहप्रभृतिभिः उपभुक्तमेतत् सरः नाहं त्यजामि। यद् भविष्यति, तद् भविष्यत्येव, नियतिर्लङ्घयितुं न शक्या'। एवमुक्त्वा दैवपरतन्त्र एव स्थितः।

अत्रान्तरे प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिः मृतवदात्मानं सन्दर्श्य स्थितः। ततो जालात् अपसारितः स्थलादुत्प्लुत्य गम्भीरं नीरं प्रविष्टः। यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः। अतोऽहं ब्रवीमि,—यथाऽहमन्यह्रदं प्राप्नोमि, तदद्य विधीयताम्"। हंसौ आहतुः,—"जलाशयान्तरे प्राप्ते तव कुशलम्; स्थले गच्छतः तव को विधिः?"। कूर्मो ब्रूते,—"यथाऽहं भवद्भ्यां सह आकाशवर्त्मना यामि, स उपायो विधीयताम्"। हंसौ ब्रूतः,— "कथमुपायः सम्भवति?" कूर्मो वदति,--"युवाभ्यां चञ्चुधृतं काष्ठमेकं मया मुखेन अवलम्बितव्यम्; अतो भवतोः पक्षबलेन मयाऽपि सुखेन गन्तव्यम्"। हंसौ ब्रूतः,—"सम्भवत्येव उपायः, अस्तु एवम्।—

पक्षहीनः सदा दुःखं लभते सबलो जनः।
तरोरधो हरिः शेते वायसोऽश्नाति तत्फलम्"॥

## अष्टमः पाठः ।

अस्ति कस्यचित् महीपतेः कस्मिंश्चित् स्थाने मनोरमं शयनस्थानम् । तत्र शुक्लतरपटयुगल-मध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति स्म । सा च तस्य महीपतेः रक्तम् आस्वादयन्ती सुखेन कालं नयमाना तिष्ठति । अन्येद्युश्च तत्र शयने क्वचिद् भ्राम्यन् अग्निमुखो नाम मत्कुणः समायातः । अथ तं दृष्ट्वा सा विषसवदना प्रोवाच,—'भो अग्निमुख! कुतः त्वमत्र अनुचितस्थाने समायातः? तत् यावत् न कश्चित् वेत्ति, तावत् शीघ्रं गम्यताम्" इति । स आह,—"भगवति । गृहाऽऽगतस्य असाधोरपि न एतत् युज्यते वक्तुम् । उक्तञ्च,—

'एह्यागच्छ समाश्वसाऽऽसनमिदं कस्माच्चिराद्दृश्यसे?
का वार्त्ता? अतिदुर्बलोऽसि कुशलम्?
प्रीतोऽस्मि ते दर्शनात् ।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्त्तैः लघुस्वर्गदः'॥

अपरं, मया अनेकमानुषाणाम् अनेक-विधानि रुधिराणि आस्वादितानि आहार-

दोषात् कटुतिक्तकषायाम्लरसाऽऽस्वादनानि च, मया कदाचित् मधुररक्तं न समास्वादितम् । तत् यदि त्वं प्रसादं करोषि, तदा अस्य नृपतेः विविध-व्यञ्जनान्नपान-चोष्यलेह्यस्वाद्वाहारवशात् यत् मिष्टं रक्तं सञ्जातं, तदास्वादनेन सौख्यं सम्पादयामि जिह्वाया इति । उक्तञ्च,—

'यदसत्यं वदेत् मर्त्त्यो यद्वाऽसेव्यञ्च सेवते ।
यद्गच्छति विदेशञ्च तत्सर्वमुदरार्थतः' ॥

तन्मया गृहाऽऽगतेन बुभुक्षया पीड्यमानेन त्वत्सकाशात् भोजनम् अर्थनीयम् । तन्न त्वया एकाकिन्या अस्य भूपतेः, रक्तभोजनं कर्त्तुं युज्यते" । तच्छ्रुत्वा मन्दविसर्पिणी आह,-"भो मत्कुण ! अहम् अस्य नृपतेः निद्रावशं गतस्य रक्तमास्वादयामि, त्वं पुनः अग्निमुखः चपलश्च, तद् यदि मया सह रक्तपानं करोषि, तत्तिष्ठ, पश्चात् अभीष्टतरं रक्तम् आस्वादय" । सोऽब्रवीत्, —"भगवति ! एवं करिष्यामि, यावत् त्वं न आस्वादयसि प्रथमं नृपरक्तं, तावत् मम देवगुरुकृतः शपथः स्यात्, यदि तत् आस्वादयामि" । एवं तयोः परस्परं वदतोः स राजा तच्छयनम् आसाद्य

प्रसुप्तः। अथ असौ मत्कुणो जिह्वालौल्यात् उत्कृष्टरक्तपानौत्सुक्याच्च जाग्रतमपि तं महीपतिम् अदशत्। अथवा साध्विदमुच्यते,—

"स्वभावो नोपदेशेन शक्यते कर्त्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम्॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनाऽऽत्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्त्तुमन्यथा"॥

अथ असौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेव उत्थितः प्रोवाच,—"अहो! ज्ञायताम्, अत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति, येन अहं दष्टः" इति। अथ ये कञ्चुकिनः तत्र स्थिताः, ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुः। अत्रान्तरे स मत्कुणः चापल्यात् खट्वाऽन्तं प्रविष्टः, सा मन्दविसर्पिणी अपि वस्त्रसन्ध्यन्तर्गता तैः दृष्टा, व्यापादिता च। उक्तञ्च,—

"मिष्टाऽऽलापेन सन्तुष्टः मैत्रं न कुरुते सुधीः।
अज्ञातहृदये तत्तु मरणाय प्रकल्पते"॥

—

नवमः पाठः ।

कस्मिंश्चित् समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म । ततो गच्छति काले समयम् आसाद्य टिट्टिभी गर्भम् आधत्त । अथ आसन्न-प्रसवा सती सा टिट्टिभम् ऊचे,—"भोः कान्त ! मम प्रसवसमयो वर्त्तते, तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं, येन तत्र अहम् अण्डकविमोक्षणं करोमि"। टिट्टिभ आह,—"भद्रे ! रम्योऽयं समुद्र-प्रदेशः, तदत्र एव प्रसवः कार्य्यः"। सा प्राह,—"अत्र पूर्णिमादिने समुद्रवेला चरति, सा मत्त-गजेन्द्रान् अपि समाकर्षति, तद् दूरम् अन्यत्र किञ्चित् स्थानम् अन्विष्यताम्"। तत् श्रुत्वा विहस्य टिट्टिभः प्राह,—"भद्रे ! न युक्तमुक्तं भवत्या, का शक्तिः समुद्रस्य—यो मम दूषयिष्यति प्रसू-तिम् ?—किं न श्रुतं भवत्या ?—

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदम् ।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः ?"॥

तत् श्रुत्वा समुद्रः चिन्तयामास,—"अहो ! गर्वः पक्षिकीटस्य अस्य !! अथवा साध्विदमुच्यते,—

'उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते' ? ॥

तत् मया अस्य प्रमाणं कूतूहलादपि द्रष्टव्यं, किं मम एषोऽण्डापहारे कृते करिष्यति ?" इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाः टिट्टिभ्याः समुद्रो वेला-व्याजेन अण्डानि अपजहार। अथ आयाता सा टिट्टिभी प्रसवस्थानं शून्यम् अवलोक्य प्रलपन्ती टिट्टिभम् ऊचे,—"भो मूर्ख ! कथितम् आसीत् मया ते यत्, समुद्रवेलया अण्डानां विनाशो भवि-ष्यति, तद् दूरतरं व्रजावः ; परं मूढ़तया अह-ङ्कारमाश्रित्य मम वचनं न करोषि"।

टिट्टिभ आह,—"भद्रे ! एवं भवतु, सुहृद्वर्ग-समुदायेन समुद्रं शोषयिष्यामि" इति निश्चित्य वकसारसमयूरादीन् समाहूय प्रोवाच,—"भोः ! पराभूतोऽहं समुद्रेण अण्डकापहारकेण; तच्चिन्त्य-ताम् अस्य शोषणोपायः"। ते सम्मन्त्र्य प्रोचुः,—"अशक्ता वयं समुद्रशोषणे, तत् किं वृथाप्रया-सेन ? उक्तञ्च,—

'अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्त्तेत शीर्णदन्तो गजो यथा'॥ इति"।

## दशमः पाठः ।

अस्ति कस्मिंश्चित् वनोद्देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरक-क्रव्यमुखनामानौ शृगाल-वृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रति-वसतः । अथ अन्यदिने सिंहेन कदाचित् आसन्न-प्रसवा प्रसववेदनया स्वयूथाद् भ्रष्टोपविष्टा उष्ट्री कस्मिंश्चित् वनगहने समासादिता । अथ तां व्यापाद्य यावदुदरं स्फोटयति, तावज्जीवन् लघु-दासेरकशिशुर्निष्क्रान्तः । सिंहोऽपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिम् उपागतः ; परं स्नेहात् बालदासेरकं त्यक्तं गृहमानीय इदम् उवाच,—"भद्र ! न तेऽस्ति मृत्योर्भयं मत्तः, न अन्यस्मादपि । ततः स्वेच्छया अत्र वने भ्राम्यतु ; यतस्ते शङ्कुसदृशौ कर्णौ, ततः शङ्कुकर्णो नाम भविष्यति" इति । एवमनुष्ठिते चत्वा-रोऽपि ते एकस्थाने विहारिणः परस्परम् अनेक-प्रकारगोष्ठीसुखम् अनुभवन्तः तिष्ठन्ति । शङ्कु-कर्णोऽपि यौवनपदवीम् आरूढः, क्षणमपि न तं सिंहं मुञ्चति । अथ कदाचित् वज्रदंष्ट्रस्य केनचित् वन्येन मत्तगजेन सह युद्धम् अभवत् ।

तेन मदवीर्य्यात् स दन्तप्रहारैः तथा क्षतशरीरो विहितः,—यथा प्रचलितुं न शक्नोति। तदा क्षुत्क्षामकण्ठः तान् प्रोवाच,--"भोः! अन्विष्यतां किञ्चित् सत्वं, येन अहमेवं स्थितोऽपि तं व्यापाद्य आत्मनो युष्माकञ्च क्षुत्प्रणाशं करोमि"। तच्छ्रुत्वा ते वयोऽपि वने सन्ध्याकालं यावद्-भ्रान्ताः, परं न किञ्चित् सत्वम् आसादितवन्तः। अथ चतुरकः चिन्तयामास,—"यदि शङ्कुकर्णोऽयं व्यापाद्यते, ततः सर्वेषां कतिचित् दिनानि तृप्तिर्भवति, परं नैनं स्वामी मित्रत्वात् आश्रय-समाश्रितत्वाच्च विनाशयिष्यति। अथवा बुद्धि-प्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये,—यथा व्यापादयिष्यति। उक्तञ्च,—

'अवध्यं चाथवाऽगम्यमकृत्यं नास्ति किञ्चन।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत्'॥ इति"

एवं विचिन्त्य शङ्कुकर्णम् इदमाह,—"भोः शङ्कु-कर्ण! स्वामी तावत् पथ्यं विना क्षुधया परिपीड्यते। स्वाम्यभावात् अस्माकमपि ध्रुवं विनाश एव। ततो वाक्यं किञ्चित् स्वाम्यर्थे वदिष्यामि, तत् श्रूयताम्"। शङ्कुकर्ण आह,—

"भोः ! शीघ्रं निवेद्यतां,—येन तं वचनं निर्विकल्पं करोमि । अपरं, स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति" । अथ चतुरक आह,—"भो भद्र ! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भविष्यति, स्वामिनः पुनः प्राणयात्रा भवति" । तत् आकर्ण्य शङ्कुकर्णः प्राह,—"भद्र ! यदि एवं, तत् मदीयप्रयोजनम् एतत्, कथमुच्यताम्,—'स्वाम्यर्थः क्रियतामिति ?' परमत्र धर्मः प्रतिभुः" । इति विचिन्त्य ते सर्वे सिंहसकाशम् आजग्मुः । तत्र चतुरक आह,—"देव ! न किञ्चित्सत्वं प्राप्तम् ; भगवान् आदित्योऽपि अस्तं गतः । तद् यदि स्वामी द्विगुणं शरीरं प्रयच्छति, ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा" । सिंह आह,—"भोः ! यदि एवं, तत् सुन्दरतरम् । व्यवहारस्य अस्य धर्म्मः प्रतिभूः क्रियताम्" इति । अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः । अथ वज्रदंष्ट्रः चतुरकमाह,—"भो चतुरक ! यावदहं नदीं गत्वा स्नानदेवताऽर्चनविधिं कृत्वा आग-

च्छामि, तावत् त्वया अत्र अप्रमत्तेन भाव्यम्" इति उक्त्वा नद्यां गतः। अथ तस्मिन् गते चतुरकः चिन्तयामास,—"कथं मम एकाकिनो भोज्योऽयम् उष्ट्रो भविष्यति ?" इति विचिन्त्य क्रव्यमुखमाह,— "भोः क्रव्यमुख ! क्षुधालुर्भवान्, तद् यावदसौ स्वामी न आगच्छति, तावत् त्वमस्य उष्ट्रस्य मांसं भक्षय। अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि"। सोऽपि तच्छ्रुत्वा यावत् किञ्चित् मांसम् आस्वादयति, तावत् चतुरकेण उक्तम्,— "भोः क्रव्यमुख ! समागच्छति स्वामी ; तत् त्यक्त्वा एनं दूरे तिष्ठ, येन अस्य भक्षणं न विकल्पयति"। तथा अनुष्ठिते सिंहः समायातो यावत् उष्ट्रं पश्यति, तावत् रिक्तीकृतहृदयो दासेरकः दृष्टः। ततः भ्रूकुटिं कृत्वा परुषतरमाह,— "अहो ! केन एष उष्ट्र उच्छिष्टतां नीतः ?—येन तमपि व्यापादयामि"। एवमभिहिते क्रव्यमुखः चतुरकमुखं तथा अवलोकयति किल, यथा 'तद्वद किञ्चित्, येन मम शान्तिर्भवति' इति प्रतीयते। अथ चतुरको विहस्य उवाच,—"भोः ! माम् अनादृत्य पिशितं भक्षयित्वा अधुना मन्मुखम्

अवलोकयसि? तदास्वादय अस्य दुर्नयतरोः फलम्” इति। तदाकर्ण्य क्लयमुखो प्राणनाशभयाद् दूरदेशं गतः। एतस्मिन् अन्तरे तेन मार्गेण दासेरकसार्थो भाराऽऽक्रान्तः समायातः। तस्य अग्रेसरस्य उष्ट्रस्य कण्ठे महती घण्टा बद्धा। तस्याः शब्दं दूरतोऽपि आकर्ण्य सिंहो जम्बूकम् आह,—“भद्र! ज्ञायतां किमेषः रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः”। तच्छ्रुत्वा चतुरकः किञ्चित् वनान्तरं गत्वा सत्वरम् अभ्युपेत्य प्रोवाच,—“स्वामिन्! गम्यतां गम्यतां, यदि शक्नोषि गन्तुम्”। सोऽब्रवीत्,—“भद्र! किमेवं मां व्याकुलयसि? तत् कथय, किमेतत्?” इति। चतुरक आह,—“स्वामिन्! एष धर्मराजः तवोपरि कुपितः, यदनेन अकाले दासेरकोऽयं मदीयो व्यापादितः; तत् सहस्रगुणम् उष्ट्रमस्य सकाशात् ग्रहीष्यामि, इति निश्चित्य वृहन्मानम् आदाय, अग्रेसरस्य उष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा, व्यापन्नदासेरकसक्तानपि पितृपितामहान् आदाय वैरनिर्य्यातनार्थम् आयात एव”। सिंहोऽपि तत् श्रुत्वा सर्वतो दूरादेव अवलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात् प्रनष्टः। चतु-

रकोऽपि शनैः शनैः तस्य उष्ट्रस्य मांसं भक्षयामास,—

सर्वं कर्म सुसंसाध्यं चातुर्य्यं विद्यते यदि।
बलीयानपि चातुर्य्याद्धीनः सीदति भूतले॥

---

एकादशः पाठः।

केचन बकाः प्रतिदिनं शस्यभक्षणार्थं कस्यचित् कृषकस्य क्षेत्रं व्रजन्ति स्म। तदवलोक्य एकदा स कृषकः तान् बकान् धर्त्तुकामः क्षेत्रोपरि जालं विस्तारयामास। यदा स जालपर्य्यवेक्षणार्थं गतः, तदा तत्र एकेन सारसेन सह तान् बकान् जालपतितान् ददर्श। सारसः कृषकमवलोक्य भीतभीतोऽवदत्,—"भ्रातः कृषक! नाहं बकः, मया ते शस्यं न खादितं, मां त्यज। त्वं विचार्य्य पश्य, अत्र नास्ति कोऽपि ममापराधः, भुवि यावन्तः पक्षिणो विद्यन्ते, तेष्वहम् एव धर्मपरायणः, मया कदाऽपि कस्याप्यपकारो न कृतः। अतिस्थविरयोः पित्रोः सम्माननां, सेवा, नानास्थानेषु परिभ्रम्य गुरूणां परिपोषणं च मया सर्वदा विधीयते"। एतदाकर्ण्य कृषको-

ऽवदत्,-"शृणु रे सारस! त्वया यदुक्तं, तत् सत्यमेव, परन्तु ये मम शस्यापकारिणः, तेषां समगतः निरपराधस्यापि तव दण्डः अवश्यम्भावनीयः,—

असत्सङ्गाद्धि साधूनां भवन्ति विपदोऽनिशम्।
तस्मादसाधुसंसर्गं दूरतः परिवर्जयेत्॥

द्वादशः पाठः।

आसीत् पुरा चन्द्रवती नाम नगरी। तत्र सकलभूपाललामभूतः कश्चिदवनिपतिः प्रतिवसति स्म। कदाचित् स सुमतिवर्माणं मन्त्रिणम् अवलोक्य जगाद,—"भो मन्त्रिन्! हस्ते किमास्ते तव?" तेन धार्मिकप्रवरेण मन्त्रिणोक्तं,—"छुरिकेयम्" इति। राजाऽऽह,-"किं, छुरिका!! मह्यं देहि, प्रेक्षे"। "अतीव तीक्ष्णास्त्रमेतत्, सावधानेन भवितव्यं भवता" इत्युक्त्वा मन्त्री तदस्त्रं तस्मै दत्तवान्।

यदा राजा तदादाय निरीक्षाञ्चक्रे, तदा तद्धस्तात् स्खलितं सत् स्वस्यैव सव्यचरणस्य अङ्गुष्ठोपरि सहसा संपत्य शोणितधारामपातयत्। राजा तु कातरस्वरेणावोचत्,—"भो मन्त्रिवर! किमिति अतीव यन्त्रणा जायते?" मन्त्री तु तत्-

क्षणमेव सजलचेलखण्डेन सशोणितम् अङ्गुष्ठं संवेष्ट्य तस्मात् शोणितधारां निवार्य्य चाकथयत्,—"भो राजन्! ईश्वरेच्छया यत् घटते, तन्मङ्गलाय" इति। क्रुद्धेन नृपेण अभाणि,—"रे मूढ़! मां न जानासि? ममाङ्गुलिच्छेदनजनितः शोणितपातः त्वां सुखाकरोति? नो चेत्, 'मङ्गलाय' इति कथं वदसि? अस्य समुचितदण्डं तव विधास्यामि" इति। मन्त्रिणोक्तम्,—"ईश्वरेच्छया घटित चेत्, तदपि मङ्गलाय"। राजाऽऽह,—"भवतु तावत्, दर्शयिष्यामि"।

ततः पञ्चषेषु दिनेषु गतेषु कदाचित् यथार्थवादिनि अमात्ये अवैधदण्डं विधित्सुः राजा धार्मिकप्रवरेण बुद्धिमता सुमतिवर्मणा मन्त्रिश्रेष्ठेन, धानुष्कपदातिभिश्च सार्द्धं मृगयां कर्त्तुं काननमगमत्। ततो राजमन्त्रिणौ,—"अयं मृगः, अयं वराहः, इतो याति, इहाऽऽगच्छति, जहि जहि" इत्यादि निगदितवन्तौ, रयेण स्वसैन्यानि द्रवयन्तौ वनाद्वनान्तरम् आहिण्डाताम्।

राज्ञा तु एतावन्तं कालं यथार्थवादिनोऽमात्यस्य अवैधदण्डविधाने कोऽप्यपायो नावलोकितः।

ततो राजा तस्मिन् एकं कूपं दृष्ट्वा अमात्यं जगाद,—"भो मन्त्रिन्! अहं पिपासाऽऽर्त्तोऽस्मि, अस्मात् कूपात् किञ्चित् जलमुत्तोल्य दीयताम्"। मन्त्री यदा कूपसन्निधिं गत्वा शिरोवेष्टनवस्त्र-प्रान्तेन जलमुत्तोलयति, तदैव राजा सहसा तं कूपेऽपातयत्, अकथयच्च,-"इदानीम् ईश्वरेच्छया यत् घटते, तन्मङ्गलाय, इत्यस्य फलम् अनुभव" इति। मन्त्री पतितोऽपि पुनस्तदेवापठत्।

मन्त्रिणं कूपे पातयित्वा काननान्तरं गच्छन्—"किं कृतं मया दुष्कृतकारिणा!!" इत्थं नरहत्याजनितपापचिन्तया व्याकुलचेता राजा इतस्ततश्च बंभ्रम्यमाणः सन् किञ्चित् महाऽरण्य-मगमत्। अस्मिन्नेवावसरे—"मातः! कालि! मङ्गलमयि! विजयतां विजयताम्" इत्यादि कल-कलान् कुर्वन्तः केचन दस्यवः तं बलाद्धा-रयन्; स च राजा उपायान्तरमनवलोक्य तान् प्रसादयितुं धनप्रलोभनेन नम्री-भावेण च अतितरां विनिनाय। तैः श्रुत्वाऽपि तन्न श्रुतं, परन्तु ते परुषवचनमवोचन्,—"रे मूढ़! किं त्वां परित्यज्य वयं रिक्तहस्तेन

गमिष्यामः ? किमाश्चर्य्यमेतत्, यदि भाग्यवशात् एकं नरबलिं लभेमहि, तर्हि किम् अस्माकमीश्वरीं कालीं तेन असमभ्यर्च्य त्वां परित्यजामः ? अद्य तु नरपशोस्तव शोणितेन तां तर्पयिष्यामः। एवञ्च सति तवापि जन्मसाफल्यं भविष्यति। रे दुर्बुद्धे ! आयाहि अस्माभिः साकं, नो चेत् प्रहारेणास्थिभेदं करिष्यामः"।

राजा तेषाम् एवं वचनं शृण्वन् अतीव बिभेति स्म। ते तु दस्यवः तं राजानं देवीसन्निधिमानीय स्नापयित्वा, रक्तमाल्यवस्त्रादिना अलङ्कृत्य च उत्ससृजुः, ननन्दुश्च। स च तस्मिन्नेवावसरे प्रतिक्षणं यमयातनामनुभवन् चक्रन्द; क्रन्दनन्तु केनापि श्रुतमपि तन्न श्रुतं, परन्तु ते दस्यवः सहर्षं यूपाभ्यन्तरगतं तं चक्रुः; तेषां कश्चित् निशितखड्गमुद्यम्य तच्छेदनाय तस्थौ। एतस्मिन्नन्तरे पलितोत्तमाङ्गः कश्चित् दस्युप्रवरः प्राह,—"भोऽसमीक्ष्यकारिणः ! किं परीक्षितोऽयं नरः ? बलिप्रदानायोग्ये खलु एतस्मिन् मङ्गलन्तु सुदूरमास्तां, परन्तु अनिष्टमापतिष्यति"। एवमाकर्ण्य ते यूपान्निष्क्राम्य तस्य सर्वावयवान्

अवलोक्य च युगपदेव प्रोचुः,—"अस्य सव्यपादाङ्गुष्ठं चेलखण्डवेष्टितं दृश्यते, किमिति पश्य पश्य" इति । अथ तस्य सव्यपादाङ्गुष्ठं चेलखण्डबन्धनादुन्मोच्य सर्वे—"क्षतं क्षतम्" इति युगपदेवावोचन् । दस्युप्रवरस्त्ववोचत्,—"इह मङ्गलमये स्थाने अस्य स्थापनेनाप्यनिष्टाऽऽशङ्का, किमुत बलिप्रदानेन ? भो भोः ! मुच्यतां मुच्यतामेष दुर्लक्षणाऽऽक्रान्तः; अपरश्चानुसन्धीयताम्" ।

तदा ते तदाकर्ण्य तं राजानं तस्मात् बहिश्चक्रुः । राजा तु पुनर्जीवनमायातमिति मन्यमानः सन् मन्त्रिवचनं स्मृत्वा व्यचिन्तयत्,—"यथार्थवादिना मन्त्रिप्रवरेण सत्यमुक्तम्, 'ईश्वरेच्छया यत् घटते, तन्मङ्गलाय' इति । ईश्वरेच्छयैव मम क्षतं सञ्जातं, क्षतन्तु मङ्गलाय अभवत् ; अक्षतश्चेदहम्, अवश्यमेव बलिदानार्हो भवेयम्" इति । ततः,—"हा मङ्गलमय जगदीश्वर ! अनपराधिनं सत्यवादिनं मन्त्रिणं छलेन निघ्नतः मम का गतिर्भवेत् ? क्व गच्छामि ?" इत्येवं विललाप । "भवतु तावत्, तत्कूपसन्निधिम् अनुसन्धाय गच्छामि" इत्युक्त्वा राजा कूपसन्निधिं

ययौ । तत्र गत्वा,—"भो मन्त्रिन् ! दर्शनं देहि, अपराधिनं मां क्षमस्व, मन्त्रिघातिनं मां भगवान् कस्मिन्निरये पातयिष्यति, तन्न जाने"। एवं विलपन्तं राजानं मन्त्री कूपमध्यादवोचत्,—"राजन् ! मा विलप, अहमीश्वरेच्छया न म्रिये, अल्पजलोऽयं कूपः" इति । राजा सहर्षं प्रक्षिप्तशिरोवेष्टनवस्त्रेण तमुद्तारयत्, दस्युभिः स्वस्य आक्रमणात् परित्यागपर्य्यन्तं सर्व्ववृत्तान्तम् अश्रावयच्च । मन्त्री तस्मात् सर्व्ववृत्तान्तमाकर्ण्य अब्रवीत्,—"भो महाराज ! कृपानिधे ! भवता यदि कूपे नापातयिष्ये, तर्हि ते सर्व्वगं त्वामपहाय, निर्व्रणं मां निशितखड्गधारामुखेऽपातयिष्यन् ; परन्तु भवता मम प्राणरक्षा कृता, अतोऽहं ब्रवीमि,—'ईश्वरेच्छया यद्घटते, तन्मङ्गलाय' इति"। राजा सलज्जं सविनयं च मन्त्रिणं प्रोवाच,-"मन्त्रिवर ! मा मां लज्जय, एषः वृत्तान्तश्च कुत्रापि नैव वाच्यः, भवत्समीपे नितरामहं लज्जितोऽस्मि । अद्य तु सम्यगवगतं, मङ्गलमयस्य जगदीश्वरस्य कृपया समुद्भूता सर्व्वैव घटना मङ्गलमयीति,—

दैवं कार्य्यं सदा विज्ञैः ज्ञेयं श्रेयस्करं भुवि ।
संशया नैव कर्त्तव्यः प्राणिनां श्रेयसे हि तत् ॥"

त्रयोदशः पाठः ।

अस्ति रत्नवती नाम नगरी । तत्र प्रियस्वदेशः चन्द्र इव लोचनसुभगकान्तिः चन्द्रदेवाऽऽख्यः कश्चित् नरपतिः प्रतिवसति स्म । तदा तादृशः कोऽपि स्वाधीनमनाः भूपतिः भुवि प्रायेण नाऽऽसीत् । स हि तात्कालिकस्य तेजोऽतिक्रान्ततपनमण्डलस्य तपनदेवस्य राज्ञः अधीनतामसहमानः परिवारवर्गपरिवृतः दृषद्बन्धुरं पार्वत्यप्रदेशमहर्निशं चंक्रमित्वा, आरण्यकैः फलमूलादिभिः कथमपि स्वजीवनमरक्षत् । तदीयः कनीयान् सोदरः नक्षत्रदेवः केनापि एकेनांशेन सर्वप्रशंसितचरित्रस्य ज्यायसः चन्द्रदेवस्य सदृशीभवितुं नाशक्नोत् ; परन्तु नितरामुद्धतस्वभावः एवाऽऽसीत् । कदाचित् अल्पमेव हेतुं लक्ष्यीकृत्य अग्रजेन सार्द्धं विवदमानः "अस्य समुचित प्रतिशोधं ग्रहीष्यामि" इत्युक्त्वा विपक्षस्य तपनदेवस्य शरणमाप स नक्षत्रदेवः ।

दुरवस्थामापन्नः चन्द्रदेवः स्वराज्यात् पलायितः पार्वत्यप्रदेशे भ्राम्यति, वार्त्तामेतां विदित्वा तपनदेवः तं रोद्धुं त्वरितं कैश्चित् योद्धृभिः सह चन्द्रदेवस्यैव भ्रातरं प्राहिणोत्। सोऽपि उपयुक्तं वैरनिर्यातनावकाशमुत्प्रेक्षमाणः तैः सह द्रुतपदमग्रजस्याभिमुखं प्रतस्थे; प्राप्य च ज्येष्ठोषितं स्थानम्, आश्रितपादपच्छायं, विश्रान्तनिद्रितं, विशाले ललाटपट्टके निन्दितमुक्ताफलाः स्थूलाः स्वेदकणिकाः बिभ्रतमग्रजमपश्यत्।

अस्मिन् क्षणे आयासमन्तरेणैवाग्रजस्यानिष्टमुत्पादयितुं समर्थोऽपि नक्षत्रदेवः प्राप्तहर्षान् वेगादायातः समभिव्याहारिणः सैनिकान् प्रेक्ष्य तारस्वरेणैवं वक्तुमुपाक्रमत,--"अरे रे सैनिकाः! मैवं स्वमनसि कुरुत यत्, निःसहायमेनं बद्ध्वा प्रभुसकाशात् पर्य्याप्तं पारितोषिकं लप्स्यामः इति। भोः! मामेव सुप्तस्य अस्य सहायस्थाने गणयत"।

योद्धारस्ते एवं श्रुत्वा असिं निष्कास्य चन्द्रदेवं विहाय नक्षत्रदेवमाचक्रमुः; चिरम् अस्यसियुद्धं प्रवृत्तमासीत्; किन्तु नक्षत्रदेवः स्वविक्रमेण

सर्वानेव तान् एकैकशः जघान । ततः रुधिर-विच्छुरितकलेवरः ज्येष्ठभ्रातुः पदोपान्तभूमौ अव-तस्थे । सुप्तोत्थितः चन्द्रदेवः सहसा तथाऽवस्थं कनीयांसं विलोक्य चिन्तितवान्,—"अहो ! मम पुत्रकलत्रादिकं हत्वा मद्विनाशायैव समुपस्थितो-ऽयं, तत् न कालं प्रतीक्षे" इति । एवं विचिन्त्य उक्तम्,—"नक्षत्र ! आगच्छ, देहि मह्यं प्रति-शोधम्" । नक्षत्रस्तु एतावन्तं कालं लुप्तसंज्ञः अतिष्ठत्, ज्येष्ठस्य वचांसि श्रुत्वा लब्धज्ञानः छिन्नकबन्धान् शवान् प्रदर्श्याबादीत्,—"आर्य्य ! आर्य्य ! अयमेव मे प्रतिशोधः" ।

वाष्पसंरुद्धकण्ठः चन्द्रदेवस्तु तदैव कनीयांसमालिलिङ्ग । तदीयपूताश्रुभिः नक्षत्रस्य कलङ्कः विधूतोऽभूत् । नक्षत्रदेवो भूयः अग्रजस्य स्नेह-मवाप्तः सन् परममानन्दमनुबभूव,—

उपकारैर्यथा वश्याः जायन्ते शत्रवो भुवि ।
प्रभूतैरपकारैस्तु न तथा स्यात् कदाचन ॥

चतुर्दशः पाठः ।

---

आसीत् कर्मपुरसंज्ञके नगरे प्रच्छन्नभाग्यनामधेयः कश्चित् ब्राह्मणकुमारः। बाल्ये वयसि विद्याऽर्जनपराङ्मुखः सः यौवनसीमानमधिरूढ़ः सांसारिककष्टं सोढ़मक्षमः सन् तवस्थेनैव केनचित् दुष्टबुद्धिनाम्ना चौरेण संमिलितः अपहरणविद्याऽनुशीलनेनैव कियन्तं कालमनैषीत्; अथवा उदरार्थं कामन्यां वृत्तिमवलम्बेत वराकः? अनया प्रक्रियया सुखमलभमानः कदाचित् दुष्टबुद्धिना सह धनवतः कस्यचित् वेश्मनि स्वविद्यायाः परिचयं प्रदातुं ग्रामान्तरं प्रस्थितः।

अथ चलन्तौ तौ पथि प्रश्रभ्ररचनानियुक्तान् कांश्चित् बालकान् प्रेक्ष्य समं प्रोचतुः,—"भो बालकाः! न युक्तमेवं क्रीड़ितुम्; यदि कश्चित् गर्त्तेऽस्मिन् निपतेत्, तर्हि सः विकलाङ्गो भूत्वा सुचिरं क्लेशमनुभविष्यति"। निशम्यैतद् वचः क्रीड़तां तेषामेको जगाद,—"राजपथं सन्त्यज्य यदि कश्चित् कुमार्गगामी स्यात्, तर्हि तत्पतने को नाम दोषः?" इति।

अनेनैव वचसा प्रतिहतान्तःकरणः विप्रवटुः,—"अये ! कथेयं विशेषेण मामेव लक्ष्यीकरोति । कुमार्गं प्रधावितस्य मम एतादृशी महती क्लेशपरम्परा । एतेन गुरोरनुशासनसदृशेन बालवचसा मम ज्ञानाक्षि समुन्मीलितम् । अद्य प्रभृति पापमार्गं त्यक्ष्यामि" सशोकमेवं बहु विचिन्त्य सहचरं दुष्टबुद्धिम् अवादीत्,—"सखे ! यदि मां मित्रस्थाने परिगणयसि, यदि वा मम वचसि श्रद्धा वर्त्तते, तर्हि साधुजनजुगुप्सितम् अनिर्वृतिप्रायं त्यजतु भवानिमं पन्थानम् । वृत्तावस्थां संस्थितोऽहं मुहूर्त्तमपि शान्तिं न लब्धवानस्मि" । एवं श्रुत्वा स्मितास्यः दुष्टबुद्धिः सहचरं विकृतचित्तं विभाव्य कर्त्तव्यानुष्ठानार्थं ग्रामाभिमुखं प्रययौ, ब्राह्मणस्तु स्वगृहं प्रति ।

गृहाऽऽगतेन तेन भर्त्तृमङ्गलकाङ्क्षिणी स्वभार्य्या व्यलोकि । दृष्ट्वा च सा अयथाकालं समुपस्थितं भर्त्तारमागमनप्रयोजनमपृच्छत् । सम्प्रति धर्ममतिः सः ब्राह्मण्यै आनुपूर्विकं सर्वं निवेद्य सकरुणमुच्चैः अक्रन्दत् । बुद्धिमती तद्भार्य्या स्थिरप्रकृतिमवलम्बमाना एव धर्म्यवाचा तदवस्थं

स्वामिनं बहु उपदिदेश। स ब्राह्मणस्तु सार-गर्भामुपदेशमालामाकर्ण्यापि व्याकुलितमनाः 'राजदण्ड एव मे पापापहन्ता' एवं निश्चित्य कथ-मपि यामिनीमतिवाह्य प्रातः राज्ञः सभामण्डपं गत्वा, तत्र यथाकर्त्तव्यमनुष्ठाय सर्वं समाचचक्षे नृपालाय। धर्मभीरुः राजा तस्मै सेवावृत्ति-परिग्रहे मतिमदात्। राजाज्ञामेव सम्मान्य स दासत्वं चिकीर्षुः प्रतिगृहं धनिनां समगच्छत्, परं सर्वे एव तं चौरं सम्भाव्य स्वाऽऽलयात् दूरी-चक्रुः। "अहो! कष्टम्! प्रथमं धृतचौरव्रतं, पश्चात् दत्तधर्ममानसमपि जनम् अन्यथा विश-ङ्कन्ते महाजनाः। किं कर्त्तुमुचितमधुना मम?" इत्येवं विमृशन् कस्यचित् कृषकस्य शस्यक्षेत्रे हलकार्य्यं कर्त्तुं जगाम, तया च वृत्त्या यत् किञ्चित् उपार्जयामास, तेनैव सुकष्टं परिवार-वर्गमात्मानञ्चापुषत्।

एकदा निशीथे भार्य्यया सह तस्य दुरवस्था-निमित्तः संवादः समारब्धः। तत्र ब्राह्मणी आह,— "स्वामिन्! गच्छ त्वं प्रभाते जीविकाऽर्जनाय, अहं सुखोपायसमुद्भावनार्थं यतिष्ये"। ब्राह्मणस्तु

"तथा" इत्युक्त्वा समापितप्रातःकृत्यः प्रभोः चेत्रं गत्वा कठोरपरिश्रमं कृत्वा मध्यन्दिने सम्प्राप्तालयः काश्चित् ताम्रमुद्राः ब्राह्मण्यै प्रादात् । ततः तैलेनाभ्यज्य कलेवरं स्नातुं प्रस्थितं तमन्वगात् ब्राह्मणी । अवाप्तमरस्तीरा सा ता मुद्राः पयसि निक्षिप्य तासां पुनःसंग्रहे ब्राह्मणं न्ययोजयत् । उपायान्तरमनवलोक्य ब्राह्मणः सावधानमन्विष्य उपार्जितमुद्राणामर्द्धं लेभे । ततः ब्राह्मणी-वाक्यतः पुनर्निक्षिप्तोत्तोलिताः ता मुद्रा विगणय्य अर्द्धमेवोपार्जितानां लब्ध्वा स्तब्धीबभूव ।

अथ ब्राह्मणीवाक्यतः दृढ़प्रतीतिरभूत् प्रच्छन्नभाग्यस्य यत्, अहं स्वामिनः कार्य्यं सुसम्पन्नं न करोमि, अत एव मे दुःखं नापास्तम् । परेऽह्नि ब्राह्मणः द्विगुणतरेण परिश्रमेण स्वामिनः कार्य्यं सम्पादयामास । प्रभुरपि परितुष्टः द्विगुणतरं वेतनमयच्छत् । एवं स्वामिनोऽनुकम्पां सम्प्राप्य संसारदुःखविनिर्मुक्त एकं गृहं निर्ममौ । काश्चित् भूसम्पत्तिमपि उपार्जयामास ।

अथ दुष्टबुद्धिः ब्राह्मणस्य सम्पदमसहिष्णुः

कदाचित् मध्यरात्रे तस्य धनादिकमपहर्त्तुकामः गृहपार्श्वे सन्धिखननसुयोगमनुसन्दधानः तस्थौ।

अत्रान्तरे ब्राह्मणस्तु सुप्तोत्थितः व्याकुलितमनाः प्रियतमां सम्बोध्य कथयामास,—"प्रिये! महदद्भुतं दृष्टम्! निद्रितं मां काचित् दिव्या रमणी स्वरूपं प्रदर्श्य आदिदेश,—'वत्स! दुराचारः त्वम् एकदा मया त्यक्तः आसीः, अधुना प्रीताऽहं त्वां धनवन्तं कर्त्तुमागता। एहि मया सह, तत्र क्षेत्रसमीपे विशालाश्वत्थतरुतले यदस्ति, तत् स्वगृहमानय। तच्च धनं त्वदन्वये कदाऽपि न क्षयं गमिष्यति' इति"। तच्छ्रुत्वा ब्राह्मणी स्वामिने न्यवेदयत्,—"नाथ! विरम अस्मात् सम्भाव्यानिष्टपातात् लोभात्। परिश्रमलभ्यादन्यस्मै धनाय न स्पृहयामः वयम्। उत्साहवन्तं भवन्तं लक्ष्मीः स्वयमेवानुग्रहीष्यति"। ब्राह्मणः,—"तथा" इत्युक्त्वा पुनः शेते स्म। दुष्टबुद्धिरेतत् सर्वं ज्ञात्वा तदैव गत्वा तत् अश्वत्थमूलं चखान, एकं सुवर्णकलसञ्च उत्तोल्य तदावरणमुन्मोच्य गर्जन्तमेकं विषधरमपश्यत्। भीतः निराशश्च सः ब्राह्मणाय क्रुध्यन् सन् कमपि उपायमवलम्ब्य कलसं गृहीत्वा

ब्राह्मणगृहमभिप्रतस्थे । तत्र सन्धिं प्रकल्प्य तन्मध्यतः कलसं गृहाभ्यन्तरे निक्षिप्तवान् । अथ कलसात् विनिर्गतेन विषधरेण दष्टोऽसौ चौरो दुष्टबुद्धिः मृतश्च । सर्पोऽपि पलायाञ्चक्रे । कलसपातशब्देनैव ब्राह्मणः तत्पत्नी च जजागार । अल्पक्षणेनैव तद्गृहं राजयोग्यैः मणिमाणिक्यादिभिः पूरितं दम्पत्योर्मनसि विस्मयमुत्पादयामास ।

पापिनाञ्च सदा दुःखं सुखं वै पुण्यकर्मणाम् ।
एवं स्थिरतरं ज्ञात्वा साधुवृत्तिं समाचरेत् ॥

---

पञ्चदशः पाठः ।

---

पुराऽऽसीत् नलो नाम निषधाधिपतिर्नृपतिः । यस्य रूपेण एव विजितः कामाऽवमत्याऽऽत्मानं कोपितस्य त्रिपुरारेः नेत्राग्नौ तनुम् अजहात् । तेन अकृतदारेण विचिन्वता दमयन्ती इति भीमस्य विदर्भाधिपतेः सुता सुसदृशी अश्रावि । भीमेन अपि धरां विचिन्वता सर्वेषु राजसु नलात् अपरो राजा स्वदुहितुः सदृशः न

दृदृशे । अत्रान्तरे दमयन्ती जलक्रीड़ाऽर्थं सरोवरमेकम् अवातरत् । तत्र कमपि राजहंसं दृष्टाम्बुजं दृष्ट्वा क्रीड़ाऽर्थं क्षिप्तोत्तरीया बबन्ध । स बद्धस्तां दिव्यहंसः दिव्यया गिरा समब्रवीत् — "राजपुत्रि ! ते महान्तम् उपकारं करिष्यामि, विमुञ्च माम्, अस्ति नैषधेषु नलो नाम राजा, यं हि सद्गुणैः गुम्फितं हारमिव हृदि दिव्याङ्गनाः सततं वहन्ति । तस्य त्वं सदृशी भार्य्या, स च तव सदृशः पतिः, तदत्र योग्यसंयोगे अहं युवयोः कामदूतो भवामि" । तदाकर्ण्य सा दिव्यहंसं तं सत्यवादिनं मत्वा "एवमस्तु" इतिवादिनी अमुञ्चत्, अगदच्च,—"न मया अन्यो नलात् वरणीयः" इति ।

ततश्च हंसोऽसौ निषधेषु आशु गत्वा जलक्रीड़ाप्रवृत्तेन नलेन सङ्गतं सरः समाश्रयत् । नलोऽपि तमपूर्वं राजहंसं दृष्ट्वा कौतुकाऽऽक्षिप्तचेताः स्वोत्तरीयेण तं बबन्ध । अथ बद्धोऽसौ राजहंसः मनुष्यगिरा समवादीत्,—"राजन् ! मुञ्च मां त्वदुपकारार्थम् आगतं, शृणु, यदहं कथयामि ।—

अस्ति विदर्भेषु भीमस्य राज्ञः सुता क्षिति-तलतिलोत्तमा देवैरपि स्पृहणीया दमयन्ती नाम। त्वद्गुणाऽऽकृष्टचेतसा तया त्वमेव भर्त्ता वृतः, तदहं वक्तुम् इतस्त्वाम् उपागतः"। इत्येवं राजहंसस्य सफलोज्ज्वलैः वचोभिः पुष्पधन्वनो विशिखैश्च सममसौ नलोऽविध्यत ; अब्रवीच्च.— "हंसराज ! धन्योऽस्मि, योऽहं मूर्त्तया इव मनोरथसम्पत्त्या तया वृतः" इत्युक्त्वा तेन राज्ञा मुक्तोऽसौ हंसः गत्वा दमयन्त्यै यथावृत्तं यथाक्रमं शशंस, जगाम च स्वस्थानम्। दमयन्ती च सोत्कण्ठा युक्त्या मातृमुखेन निजं पितरं नल-प्राप्त्यै स्वयंवरम् अयाचत। राजा च विदर्भ-पतिस्तस्याः स्वयंवरम् अनुमत्य पृथिव्यां सर्वान् पार्थिवान् प्रति दूतान् व्यसर्जयत्। दूतमुखात् विदितवार्त्ताश्च भूमिपाः विदर्भान् प्रति व्रजन्ति स्म। नलोऽपि समुत्सुको रथाऽऽरूढश्चचाल। तावच्च इन्द्रादयो लोकपाला मुनेः नारदात् दमयन्त्याः नलप्रेमस्वयंवरौ शृण्वन्ति स्म। तेषु च इन्द्रवायुयमाग्निवरुणाः सम्भ्रान्ता समु-त्सुकाः गच्छतः तस्य नलस्य एव अन्तिकं

समाजग्मुः, ऊचुश्च तं विनीतं विदर्भान् प्रति प्रस्थितं,—"राजन्! इतो गत्वा अस्मद्वचनात् दमयन्तीम् इदं वचः ब्रूहि, पञ्चानाम् अस्माकम् एकतमं वरय, मर्त्त्येन नलेन ते किम्? मर्त्त्याः मरणशीलाः, देवास्तु अमराः। नृपते! त्वञ्च अस्मद्वरात् अन्यैः अलक्षितः तत्पार्श्वं प्रवेक्ष्यसि" इति। नलोऽपि "तथा" इति देवाऽऽज्ञां शिरसि गृहीत्वा, गत्वा च अन्तःपुरं तस्याः, अलक्षित एव राजपुरुषैः शशंस सर्वं देवनिदेशं दमयन्त्यै। सा तु श्रुत्वा एतत् साध्वी प्राब्रवीत्,—"देवास्ते सन्तु तादृशाः, मम तु नल एव भर्त्ता, न प्रयोजनं मे देवैः" इति तस्या वचः श्रुत्वा नलः आत्मानं प्रकाश्य, गत्वा च यथावृत्तं देवेभ्यः समाचचक्षे। देवाश्च—"वश्या वयं ते स्मृतमात्रोपगामिनो भविष्यामः" इति तुष्टा वरं तस्मै नलाय प्रददुः। अथ हृष्टे नले विदर्भान् प्रति प्रयाते, तैश्च सुरेश्वरैः दमयन्त्या वचनं शुश्रुषुभिः विदर्भान् गत्वा नलरूपम् अधारि। ततश्च भीमसभां गत्वा स्वयंवरे प्रवृत्ते मर्त्त्यधर्मानुपाश्रिता देवा नलान्तिकमेव उपाविशन्।

अथ दमयन्ती स्वयंवरा स्वयंवरक्षेत्रमेत्य स्त्रैन भावेन समाविद्यमानान् एकैकशो नृपान् उज्झती क्रमात् नलान्तिकम् आगतवती ; दृष्ट्वा च तत्र छायानिमेषादिगुणान् षट् नलान् उपविष्टान् समुद्भ्रान्ता व्याकुला च समचिन्तयत्,--"नूनं तैः लोकपालैः पञ्चभिर्माया एषा परिकल्पिता, षष्ठञ्च एषां नलं मन्ये, न च अत्र मे अस्ति गतिः"। इत्यालोच्य एव साध्वी सा नलैकाऽऽसक्तमानसा आदित्याभिमुखी एवम् अब्रवीत्,—हे लोकपालाः ! यदि मे मनः स्वप्नेऽपि नलादन्यत्र न चलितं, तत्तेन सत्येन यूयं मे स्वस्वरूपं दर्शयत, कन्यायाः पूर्ववृतात् वरात् अन्ये परपुरुषाः, सा च कन्या तेषां परदाराः, तत् कथमेष मोहो युष्माकम् ?" एतच्छ्राकर्ण्य ते शक्रादयः पञ्च स्वेन स्वेन रूपेण तदा व्यराजन्, षष्ठस्तु सत्यनल एव अभवत् । अथ सा दमयन्ती तस्मिन् फुल्लेन्दीवरसन्निभतां दृशं वरणमालाञ्च संप्रहृष्टा समर्पयत् । पुष्पवृष्टिश्च तदानीं नभसः सम्बभूव । ततो राजा भीमः तस्य नलस्य तस्याश्च दमयन्त्या विवाहमङ्गलं व्यधात । तेन

च नृपेण विदर्भपतिना यथायथं कृतसत्क्रिया अपरे नृपा देवाश्च महेन्द्रादयः यथागतं प्रतिजग्मुः। गच्छन्तश्च शक्रादयः द्वौ आगच्छन्तौ पथि दमयन्त्यर्थं कलिद्वापरौ ददृशुः, ऊचुश्च,--"न गन्तव्यं विदर्भेषु युवाभ्यां, तत एव आगता वयं, वृत्तश्च असौ स्वयंवरः, नृपतिर्नल एव तया दमयन्त्या वृतः" इति। तौ ऊचतुः पापौ क्रोधपरीतौ,--"देवान् भवादृशान् हित्वा यत् स मर्त्त्यस्तया वृतः, तदवश्यम् आवां तयार्विंयोगं करिष्यावः"। एवं कृतप्रतिज्ञौ तौ निवृत्य स्वस्थानं ययतुः। नलश्च सप्त दिवसान् श्वशुरसद्मनि स्थित्वा दमयन्त्या समं कृतार्थो निषधान् देशान् प्रत्यगमत्। तत्र तु दम्पत्योः तयोर्यथा प्रेम समभवत्, तथा गौरीशङ्करयोरपि न, गौरी शङ्करस्य देहार्द्धं, सा तु दमयन्ती तस्य नलस्य आत्मैव अभूत्।

कालेन सा दमयन्ती नलात् इन्द्रसेनं नाम तनयम् इन्द्रसेनाञ्च नाम कन्यकां क्रमात् प्रासूत। तावच्च कलिरसौ अनुक्षणानुवर्त्तिनोऽपि नलस्य चिराय छिद्रं प्राप्य प्रतिज्ञार्थनिश्चितः समभवत। एकदाऽसौ नलः पानमदेन मुषित-

स्मृतिः अप्रक्षालितचरणः सन्ध्याम् अनुपास्यैव सुष्वाप। दिवानिशं दत्तदृष्टिः कलिः छिद्रमेतद्वाप्य तस्य नलस्य शरीरमध्ये अविशत्। देहप्रविष्टेन च तेन कलिना अपहृतज्ञानः असौ नृपः धर्म्यमाचारम् अपहाय यथारुचि समाचचार। अक्षैः अदीव्यत्, दासीभिः अरंस्त, असत्यम् अब्रवीत्, दिवास्वप्नम् असेवत, रात्रिषु जजागार, अकारणं कोप चकार, अन्यायेन अर्थमाददे, सताम् अवमानम् असताञ्च सम्मान चकार। द्वापरश्च छिद्रं प्राप्य प्रविष्टान्तःशरीरः तस्य राज्ञः भ्रातरं पुष्कराऽऽख्यं समुत्सृष्टसत्पथं व्यधत्त।

कदाचित् नृपतिर्नलः भ्रातुः पुष्कराऽऽख्यस्य गृहे दानाऽऽख्यं सुन्दरं धवलं वृषं व्यलोकयत्। लोभाच्च तं वृषं मृगयमाणाय तस्मै ज्यायसे नलाय असौ द्वापरग्रस्तबुद्धिः पुष्कराऽऽख्यः न प्रादात्, अवादीच्च,—"यदि ते तस्मिन् वृषभे वाञ्छा अस्ति, तदा द्यूतेन मत्त एनं विजित्य गृहाण"। तदाकर्ण्य सोऽपि नलस्तथैव प्रतिपेदे। प्रवृत्तं भ्रात्रोरुभयोः परस्परं द्यूतम्। पुष्करा-

ऽऽख्यस्य धन स एव वृष:, नलस्य तु इभादीनि बहूनि। पुष्कराऽऽख्य: पुन: पुनर्जिगाय, नलस्तु अजीयत एव। इत्थं द्विवैर्दिनै: समग्रे बले कोशे च दुरोदरहारिते वार्य्यमाणोऽपि नल: नैव चचाल स्वव्यवसायात् कलिविप्लुतमति:।

अथ क्रमेण समग्रं राज्यं हृतं विदित्वा दमयन्ती निजौ तनयौ रथमारोप्य स्वपितु: गृहं प्राहिणोत्। तत: सर्वं हारितम् अवलोक्य पुष्कराऽऽख्य: नलम् अब्रवीत्,—"त्वया अन्यत् सर्वं हारितम्, इदानीं मत्समक्षं दमयन्तीम् आनीय प्रतिपणं कुरु"। इत्युक्तिवात्यया अनल इव असौ नल: प्रजज्वाल, न च तत्काले किञ्चित् प्रत्युवाच, नापि तां पणीचकार। तत: पुष्कराऽऽख्य: समब्रवीत्,—"न करोषि चेत् भार्य्यापणं, तदस्मात् मम राज्यात् सभार्य्य: सत्वरं निर्याहि"। तत् श्रुत्वा एव नल: दमयन्त्या समं देशात् तस्मात् राजपुरुषै: आसीमान्तप्रवासित: निर्ययौ। हा कष्टं! नलस्यापि कलिना एतादृशी अवस्था कृता, किमन्येषां क्षीणामिव देहिनां!! धिक्! धिक्! राजर्षीणामपि ईदृशं वैक्लव्यदं विपदामाश्रयं द्यूतम्।

अथ आहृतैश्वर्य्योऽसौ नलः विदेशं व्रजन् दमयन्त्या सह क्षुधापरीतः वनात् वनान्तरं प्रापत् । तत्र तया कुशक्षतसुकुमारचरणया साकं कस्मिंश्चित् सरित्तीरे विश्रान्तः चरन्तौ द्वौ हंसौ समैक्षत; दृष्ट्वा एव आहारार्थं तयोर्ग्रहणाय उत्तरीयकं निचिक्षेप, तौ च हंसौ तत् हृत्वा अन्तरीक्षं प्रजग्मतुः। ततश्च विस्मितोऽसौ नलः,— "हंसरूपेण तौ एव कलिद्वापरौ वासस्ते हृत्वा गतौ" इति अन्तरीक्षात् वाचः शुश्राव । अथ स राजा एकवस्त्रः विमनाश्च युक्त्या दमयन्त्यै पितुर्गृहगमनाय पन्थानम् अदर्शयत्,—"हे प्रिये! अयं पितृगृहगमनाय विदर्भजनपदमार्गः, एषः अङ्गदेशगमनमार्गः, असौ च कोसलजनपदपथः" । तदाकर्ण्य सा दमयन्ती—"किमर्थं माम् आर्य्यपुत्रस्त्यक्ष्यन् इव मार्गं वदति ?" इति शङ्किता इव अभवत् । ततः तौ दम्पती फलमूलभुजौ तत्र वने निशायां श्रान्तौ कुशसंस्तरे समविशताम् । क्रमेण अध्वखिन्ना दमयन्ती निद्राम् अवाप । नलस्तु कलिमोहितो गन्तुमनाः समुत्थाय एकवस्त्रः तां दमयन्तीं विमुच्य छिन्नं तदुत्तरीयार्द्धं प्राहृत्य च

प्रययौ। दमयन्ती तु रात्र्यर्द्धे प्रबुध्य तं पतिम् अपश्यन्ती समन्तात् विचित्य क्लिश्यन्,—"हा आर्य्यपुत्र! महासत्त्व! रिपुषु अपि कृपालो! हा मत्प्रियतम! केनासि मयि निष्करुणीकृतः? एकाकी च कथं पद्भ्याम् अटवीषु विचरिष्यसि? कस्ते श्रमापनयनाय सलिलादिदानेन सेवां करिष्यति? यौ च ते चरणाम्बुजौ महीभुजां मौलिमालापरागेण सततं रञ्जितौ, किं तौ धूलिः कलुषयिष्यति? यच्च तेऽङ्गं हरिचन्दन-चूर्णेन आलिप्तं, तत् कथं मध्याह्नार्कातपं सहिष्यते? किं मे शिशुना पुत्रेण, दुहित्रा, वा आत्मना? तव एकस्यैव शिवं देवाः कुर्वन्तु, यदि अहं सती"। इत्येवम् अनुशोचन्ती एकाकिनी दमयन्ती तत्-पूर्वदर्शितेन पथा शनैः प्रतस्थे। कथञ्चित् सा नदीशैलवनानि अतिचक्राम, न अतिचक्राम तु भर्त्तरि ऐकान्तिकीं भक्तिम्। सतीतेजश्च मार्गे ताम् अरक्षत्, येन दमयन्तीं ग्रसन्तं भुजङ्गं निघ्नन् कश्चित् लुब्धकः तां कामयमानः सद्य-देव भस्मसात् अभूत्। ततो दैवात् वणिक्-

नरपतेः पुरं प्राप । तत्र च राजमाता प्रासाद-शिखरगता दूरात् तां राजपुत्रीम् इव सौन्दर्य्य-समुज्ज्वलां दृष्ट्वा स्वात् हर्म्यतः अवतीर्य्य दासीभिः ससत्कारम् आनाय्य स्वान्तिकमवासयत् । सा तु तस्या महादेव्याः सकाशे सततं भर्त्तृत्यक्तेति विमनाः समतिष्ठत । तावच्च तस्याः पिता भीमनरपतिः तं नलोदन्तम् अवगत्य तयोर्दम्पत्योः अन्वेषणाय आप्तान् द्विजान् व्यसर्जयत् । तेषाञ्च सुदेवो नाम एकः ब्राह्मणः दमयन्त्याः भ्रातृसखः भ्रमन् तां सुबाहुराजधानीं प्राप । स तु तत्र तां दमयन्तीं सुदुःखिताम् आगत्य समुदैक्षत, साऽपि तं तथैव भ्रातृसखम् अद्राक्षीत् ।

अथ अन्योन्यं प्रत्यभिज्ञाय समेत्य तौ तथा रुदितः स्म, यथा राजमाता न किमपि अबुध्यत । यावच्च सा देवी तौ यथावत् वस्तु अपृच्छत्, तावत् तां दमयन्तीं स्वां भगिनीसुतां बुबुधे । ततः सा तद्वृत्तान्तं पुत्राय आवेद्य तां यथोचितं सम्मान्य रथारूढ़ां कृत्वा प्रभूतसैनिकसहितां पितृगृहं प्रैषयत् । तत्र सा दमयन्ती प्राप्तापत्यद्वया पित्रा प्रबोध्यमानाऽपि सततं पत्यवार्त्तां विचिन्वती

व्यतिष्ठत। ततश्च तत्पिता समन्तत: तं नलं सूदस्यन्दनविद्याभ्यां दिव्याभ्याम् उपेतं समन्वेष्टुं चारान् व्यसर्जयत्, आदिशच्च,—"भवद्भिः यत्र स स्थित: सम्भाव्यते, तत्र एवं वक्तव्यं, यथा,--'हे नृशंस! चन्द्र! बालां वने प्रसुप्तां कान्तां कुमुदिनीं सन्त्यज्य अम्बरखण्डं प्राप्य च अदृश्यः क्व यातोऽसि?' इति"।

अत्रान्तरे स राजा नलश्च तस्मिन् वने निशि प्रावृतार्द्धपटो दूरं गत्वा दावाग्निम् ऐक्षत, अपश्यच्च तत्र,—"भो महासत्त्व! यावदहं न दह्ये अनेन दावाग्निना, तावत् माम् अस्य समीपात् अपसारय" इति वदन्तम्, आवद्धमण्डलं, फणारत्नप्रभाजालजटिलं, वनवह्निना उग्रहेतिहस्तेन शिरसि गृहीतमिव कञ्चन नागम्। यावच्च स उपेत्य कृपया तं दूरतो नीत्वा त्यजति, तावत् स नाग: तम् अब्रवीत्,—"भद्र! इत: पदानि दश गणयित्वा मां नय"। तत: स नल: पदानि गणयन् एव दश प्रययौ। "एकं, द्वौ, त्रीणि, चत्वारि, पञ्च, षट्, सप्त, अष्टौ, नव, दश" इति उक्तवन्तं तं नलं स्कन्धस्थितो नागो ललाटान्ते अदशत्। तेन च असौ नृप: ह्रस्वभुज: कृष्ण: विरूपश्च अभवत्।

ततः स राजा स्कन्धात् अहिम् अवतार्य्य पृष्टवान्,—"को भवान्? त्वया च कीयं मे प्रत्युपक्रिया कृता?" एतत् तस्य वचः श्रुत्वा स नागः तम् अब्रवीत्,—"राजन्! कर्कोटनामानं नागराजं माम् अवगच्छ, दंशोऽयञ्च मया कृतस्ते गुणाय एव, पश्चात् वेत्स्यसि। गूढ़ाऽऽवासे च वैरूप्यं महतां कार्य्यसिद्धये, गृहाण च अग्निशौचाऽऽख्यमिदं मद्दत्तं वसनद्वयम्, अनेन प्रावृतेन च सुरूपं पुनः प्रतिपत्स्यसे" इत्युक्त्वा दत्ताग्निशौचवसनयुगे कर्कोटके गते, नलः तस्मात् प्रदेशात् गत्वा कोसलान् प्रत्यपद्यत। तत्र स कोसलाधिपस्य ऋतुपर्णस्य बाहुकनामा सन् सारथ्यम् अकरोत्। तस्य च दिव्यरसानि भोजनानि चकार, तेन, रथचर्य्याविज्ञानतश्च स परां प्रसिद्धिम् अगमत्।

एवं गच्छत्सु कालेषु एकदा विदर्भराजचाराणां कश्चित् तत्र समाययौ। स तु चारः,—"अत्र सूदरथविद्ययोर्नलतुल्यः कश्चित् बाहुक इति सारथिः अस्ति" इति वचः शुश्राव। ततश्च स तं

नृपतेः आस्थाने स्थितं दृष्ट्वा नलं सम्भाव्य युक्त्या तत्र एतां प्रभुणा उपदिष्टाम्—

'बालां वने प्रसुप्तां नृशंस ! सन्त्यज्य कुमुदिनीं कान्ताम्।
प्राप्यैवाम्बरखण्डं चन्द्र ! अदृश्यः क्व यातोऽसि ?' ॥

इति आर्य्यां पपाठ। तत्रस्थाश्च जनाः तदाकर्ण्य उन्मत्तवाक्यमिव मेनिरे। छद्मस्थितस्तु सारथिः तं प्रत्युवाच,—"अम्बरैकदेशवर्त्ती क्षीणश्चन्द्रः अन्य-मण्डलं प्राप्य प्रविशन् कुमुदिन्या यत् अदृश्यः, तत् तस्य का नृशंसता ?" एतत् तदुत्तरं श्रुत्वा सत्यमेव तं नलं विपदुद्भूतवैरूप्यं सम्भाव्य स चारस्ततः प्रययौ; आगत्य च विदर्भेषु दमयन्त्यै तत् सर्वं दृष्टं श्रुतञ्च समवर्णयत्। ततः सा दमयन्ती रहसि स्वैरं मातरम् अब्रवीत्,—"मातः ! सत्यमेव असौ आर्य्यपुत्रः सारथिव्याजम् उपाश्रितः, तस्मात् तदानयने मन्मतानुसारिणी युक्तिर्विधीयताम्; न चायमुदन्तः पितरि त्वया कदाचन विज्ञापयितव्यः। तस्य ऋतुपर्णस्य राज्ञः समीपे दूतो विसृज्यते। गतेन च तेन दूतेन स राजा तत्र भण्यतां, यथा—'नलः क्वापि गतः, न अद्यापि तद्वार्त्ता श्रूयते, तत् प्रातरेव दमयन्ती

भूयः स्वयंवरं कुरुते, अतोऽद्यैव त्वया विदर्भेषु शीघ्रम् आगम्यताम्' इति। ततः श्रुत्वा एतां वार्त्तां रथचर्य्यानिपुणेन आर्य्यपुत्रेण स राजा एकाहेन एव ध्रुवम् इह आनेतव्यः" इत्येवं मातरम् अभिधाय दमयन्ती तं सुदेवनामानं दूतमेवं सन्दिश्य कोसलेषु व्यसृजत्। तेन च तूर्णं गत्वा तथैवोक्तः स ऋतुपर्णः समुत्सुकः हयतत्त्वज्ञं तं पार्श्वगं नलं समानयन् जगाद,--"बाहुक! 'रथज्ञानं मम अस्ति' इति अवदत् भवान्, तत् यदि शक्नोषि, तर्हि शीघ्रम् अद्यैव मां विदर्भान् प्रापय"। तदाकर्ण्य नलः,—"बाढ़ं प्रापयामि" इत्युदीर्य्य गत्वा वराश्वान् संयोज्य रथोत्तमं सज्जीचकार। "स्वयंवरप्रवादोऽयं केवलं मत्प्राप्तये नूनं तया कल्पितः, न तु सा स्वप्नेऽपि ईदृशी सम्भवति। तत् यावदहं तत्र गच्छामि, पश्यामि च ताम्" इति विचिन्त्य तस्य ऋतुपर्णस्य राज्ञः रथम् उपानयत्। ततश्च तस्मिन् रथम् आरूढ़े नृपे नलः तार्क्ष्यजवजैत्रेण रंहसा रथं वाहयितुं प्रववृते। पथि रथवेगच्युतं वस्त्रं ग्रहीतुं रथविधारणं कर्तुकामम् ऋतुपर्णं नलः प्रोवाच,—"राजन्!

क्व तव वस्त्रम्? अनेन क्षणेन अयं ते रथः बहूनि योजनानि व्यतिक्रान्तः"। श्रुत्वा एतत् ऋतुपर्णः तम् अवादीत्,—"बाहुक! देहि मे इदं रथज्ञानम्, अहं ते अक्षज्ञानं ददामि, येन अक्षा वश्या भवन्ति, संख्याज्ञानञ्च जायते। साम्प्रतमेव पश्य, ते विश्वासं जनयामि, यः पुरतोऽयं कलितरुः विद्यते, अस्य फलपत्राणां संख्यां वच्मि, गणयित्वा एतं पश्य"। इत्युक्त्वा स ऋतुपर्णः यावन्त्येव फलपर्णानि जगाद, तावन्ति एव नलेन अस्य तरोः गणितानि। ततो नलः ऋतुपर्णाय रथज्ञानं प्रादात्। ऋतुपर्णोऽपि तस्मै अक्षज्ञानं तत् प्रददौ। अथ नलः अपरे तरौ तज्ज्ञानं परीक्षते स्म, सम्यग् बुबुधे च। ततो यावत् स नलः हृष्यति, तावत् तस्य शरीरतः कृष्णकायः कश्चित् पुरुषः निरगात्। "कोऽसि?" इत्युक्त्वा क्रोधात् शप्तुमिच्छन्तं तं स पुरुषः कृताञ्जलिः प्राब्रवीत्,—"अहं कलिः, दमयन्तीहृतस्य ते शरीरम् ईर्ष्यया प्राविशं, तेन ते श्रियः तादृशीं दशाम् अवाप्ताः, वने च कर्कोटकेन त्वं दष्टोऽपि न दग्धः, अहन्तु

त्वयि स्थितः दग्धः एव । पश्य, मिथ्या परापकारः न हि कस्यापि धर्माय भवति, तदिदानीं गच्छामि एषः, शुभं ते भूयात्" इति अभिधाय तमेव तरु प्रविवेश । नलश्च तत्क्षणात् प्राप्तधर्ममतिः प्राग्वत् अभवत् । अथ रथम् आरुह्य तस्मिन्नेव अह्नि तेनैव जवेन तम् ऋतुपर्णं विदर्भान् अनयत् । आगत्य च पृष्टाऽऽगमनकारणेन भीमेन सत्कृतः, विस्मितश्च किमपि स्वयंवरचिह्नमदृष्ट्वा राजा ऋतुपर्णः "भवन्तं द्रष्टुमागतोऽस्मि" इत्युक्त्वा राजनिर्दिष्टवेश्मनि समाविशत् । दमयन्ती तु आश्चर्यं रथशब्दम् आकर्ण्य सम्भावितनलाऽऽगमना तं नलं प्राप्तं बुद्ध्वा जहर्ष, विससर्ज च तत्त्वम् अन्वेष्टुं स्वां चेटिकाम् । सा च चेटी अन्विष्य आगता तां प्रियोत्सुकाम् उवाच,—"देवि ! मया गत्वा अन्विष्टं, य एषः कोसलेश्वरः ऋतुपर्णस्ते स्वयंवर-प्रवादं श्रुत्वा आगतः, स एकेन ह्रस्वबाहुना रथविज्ञानशालिना सूदकर्म्माभिज्ञेन च रथवाहेन एकेन अङ्गा आनीतः । स च सूदशालायां गत्वा मया निरीक्षितः कृष्णवर्णः विरूपश्च ; परं तस्य कोऽपि प्रभावः यत्, अक्षिप्तमपि पानीयं तस्य

मकस्मु उत्थितं, काष्ठान्यपि अनर्पितानलानि स्वयं प्रज्वलितानि । चणेन च तत्तत् भोजनीयं दिव्यं निष्पन्नम् । एतत् महाश्चर्य्यं दृष्ट्वा अहमिह आगता" इति ।

एतदाकर्ण्य चेटीमुखात् दमयन्ती व्यचिन्तयत्,--"यदयं वय्याग्निवरुणाः रथविद्यारहस्यविच्च, तदयमेव आर्य्यपुत्रः, मन्ये, मद्विप्रयोगेण वैरूप्यं गतः, तदहम् अमुं पृच्छामि" इति सङ्कल्प्य, युक्त्या तया चेटिकया सह द्वौ दारकौ दर्शयितुं तदन्तिकं प्रैषयत् । स च नलः तौ निजौ सुतौ दृष्ट्वा अङ्के कृत्वा चिरं बद्धाश्रुधारः समरोदीत्, अवादीच्च तां चेटीं वार्त्तां पृच्छन्तीम्,—"ईदृशौ एव मे बालौ मातामहगृहे स्थितौ, तत्स्मरणात् मे दुःखं जातम्" इति । सा तु चेटी शिशुभ्यां सह आगत्य दमयन्त्यै तत् सर्वं यथावत् शशंस । साऽपि तेन सम्यक् विश्वस्ता अभवत् । पुनश्च सा स्वां चेटीं समादिशत्,—"सखि ! गत्वा त्वं मद्वचनात् तं सारथिं वद,—'श्रुतं मया यत्, भवता तुल्यो नान्योऽस्ति कश्चित् सूपकृत्, तदद्य त्वया आगत्य मम व्यञ्जनं निष्पाद्यताम्'

इति"। तथेति स तया चेष्या समभ्यर्थितः, ऋतुपर्णम् अनुज्ञाप्य दमयन्तीम् उपाययौ। अथ तं दृष्ट्वा सा दमयन्ती प्राब्रवीत्,—"सत्यं ब्रूहि, यदि त्वं नलो राजा सूतरूपधारी, चिन्ताऽब्धिमग्नं मां समुत्तारय" इति। स तु श्रुत्वा नलः स्नेहहर्षदुःखलज्जाजड़ः अवाङ्मुखः अश्रुगद्गदं ताम् अवादीत्,—"देवि ! स एवास्मि नलः पापः कुलिशकर्कशः, येन त्वां सन्तापयता व्यामोहात् अनलायितम्"। ततः सा अब्रवीत्,—"कथं त्वया ईदृशं वैरूप्यमासादितम् ?" ततः स नलः तस्यै सर्वं स्वादन्तम् आकर्कोटसख्यात् कलिनिर्गमनान्तम् अवर्णयत्। तत्क्षणाच्च सः कर्कोटदत्तम् अग्निशौचं तत् वस्त्रयुग्मं प्रावृत्य स्वं रूपं प्रत्यपद्यत। ततस्तं प्राप्ताभिरामरूपं नलं दृष्ट्वा सा दमयन्ती विकसद्वदनारविन्दा नेत्राम्बुभिः शमितदुःखाग्निः कमपि अनुपमं हर्षम् अवाप। अथ एतद्वृत्तान्तं परिजनमुखात् आकर्ण्य विदर्भनाथः नलं समभिनन्द्य प्रपूज्य च, पुरं महोत्सवपूर्णम् अकार्षीत् ; व्यसर्जयच्च कृतयथोचितसत्क्रियं श्रुतनलोदन्तहृष्टम् ऋतुपर्णं

कोसलान् प्रति। ततश्च नलः निषधान् गत्वा तं पुष्कराऽऽख्यम् अक्षज्ञानेन पुनर्विजित्य, धर्माचाररतः देहाद् गतद्वापरम् अनुजं तं कृतसंविभागं कृत्वा दमयन्त्या सह राज्यं सुखेन अशासत्।

---

षोड़शः पाठः।

सद्भिरासीत सततं सद्भिः कुर्वीत सङ्गतिम्।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत्॥ १॥
पण्डितैश्च विनीतैश्च धर्मज्ञैः सत्यवादिभिः।
बन्धनस्थोऽपि तिष्ठेत न तु राज्ये खलैः सह॥ २॥
सावशेषाणि कार्य्याणि कुर्वन्नर्थैश्च युज्यते।
तस्मात् सर्वाणि कार्य्याणि सावशेषाणि कारयेत्॥ ३॥
मधुहेव दुहेद्राष्ट्रं कुसुमञ्च न पातयेत्।
वत्सापेक्षो दुहेत् क्षीरं भूमिं गाञ्चैव पार्थिवः॥ ४॥
यथा क्रमेण पुष्पेभ्यश्चिनुते मधु षट्पदः।
तथा वित्तमुपादाय राजा कुर्वीत सञ्चयम्॥ ५॥
वल्मीकं मधुजालञ्च शुक्लपक्षे तु चन्द्रमाः।
राजद्रव्यञ्च भैक्ष्यञ्च स्तोकस्तोकेन वर्द्धते॥ ६॥
अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु सञ्चयम्।
अवन्ध्यं दिवसं कुर्य्याद्दानाध्ययनकर्मसु॥ ७॥

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम्॥ ८॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।
मृजया रक्ष्यते पात्रं कुलं शीलेन रक्ष्यते॥ ९॥

वरं विन्ध्याटव्यां निवसनमभुक्तस्य मरणं
वरं सर्पाऽऽकीर्णे शयनमथ कूपे निपतनम् ।
वरं भ्रान्ताऽऽवर्त्ते सभयजलमध्ये प्रविशनं
न तु स्वीये पक्षे तु धनमणु देहीति कथनम् ॥ १० ॥
भाग्यक्षयेषु क्षीयन्ते नोपभोगेन सम्पदः ।
पूर्वार्जिते हि सुकृते न नश्यन्ति कदाचन ॥ ११ ॥
विप्राणां भूषणं विद्या पृथिव्या भूषणं नृपः ।
नभसो भूषणं चन्द्रः शीलं सर्वस्य भूषणम् ॥ १२ ॥
माता यदि भवेल्लक्ष्मीः पिता साक्षाज्जनार्दनः ।
कुबुद्धिप्रतिपत्तिश्चेत् तद्दण्डं विधृतं सदा ॥ १३ ॥
येन येन यथा यद्वत् पुरा कर्म सुनिश्चितम् ।
तत्तदेवान्तरा भुङ्क्ते स्वयमाहितमात्मनः ॥ १४ ॥
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुङ्क्ते वै पौर्वदेहिकम् ॥ १५ ॥
न चान्तरीक्षे न समुद्रमध्ये न पर्वतानां शिखरप्रदेशे ।
न मातृमूर्ध्नि प्रधृतस्तथाऽङ्के त्यक्तुं क्षमः कर्म कृतं नरो हि ॥१६॥
दुर्गस्त्रिकूटः परिखा समुद्रो रक्षांसि योधाः परमा च वृत्तिः ।
शास्ता च वै तुशनसा प्रदिष्टं स रावणः कालवशाद्विनष्टः ॥१७॥
यस्मिन् वयसि यत्काले यद् दिवा यच्च वा निशि ।
यन्मुहूर्त्ते क्षणे वाऽपि तत्तथा न तदन्यथा ॥ १८ ॥
गच्छन्ति चान्तरीक्षे वा प्रविशन्ति महीतले ।
धारयन्ति दिशः सर्वा नादत्तमुपलभ्यते ॥ १९ ॥
पुराऽधीता च या विद्या पुरा दत्तञ्च यद्धनम् ।
पुरा कृतानि कर्माणि ह्यग्रे धावन्ति धावतः ॥ २० ॥
कर्माण्येव प्रधानानि सम्यगृक्षे शुभग्रहे ।
वशिष्ठकृतलग्नोऽपि जानकी दुःखभाजनम् ॥ २१ ॥

नाल्पीयति हि सद्विद्या दीयमानाऽपि वर्द्धते।
कूपस्थमिव पानीयं भवत्येव बहूदकम्॥ २२॥
येऽर्था धर्मेण ते सत्या ये धर्मेण गताः श्रियः।
धर्मार्थी च महान् लोके तत् स्मृत्वा ह्यर्थकारणात्॥ २३॥
अन्नार्थी यानि दुःखानि करोति कृपणो जनः।
तान्येव यदि धर्मार्थी न भूयः क्लेशभाजनम्॥ २४॥
सर्वेषामेव शौचानामन्नशौचं विशिष्यते।
योऽन्नार्थैः शुचिः भूतो न मृदा वारिणा शुचिः॥ २५॥
सत्यः शौचं मनः शौचं शौचमिन्द्रियनिग्रहः।
सर्वभूते दया शौचं जलशौचञ्च पञ्चमम्॥ २६॥
यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः।
सत्यं हि वचनं यस्य सोऽश्वमेधाद्विशिष्यते॥ २७॥
मृत्तिकानां सहस्रेण उदकानां शतेन च।
न शुध्यति दुराचारो भावोपहतचेतनः॥ २८॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥ २९॥
न प्रहृष्यति सम्मानै नावमानेन कुप्यति।
न क्रुद्धः परुषं ब्रूयादेतत् साधोस्तु लक्षणम्॥ ३०॥
दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च।
काले श्रुत्वा हितं वाक्यं न कश्चित् परितुष्यति॥ ३१॥
न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च।
अलभ्यं लभ्यते मर्त्त्यैस्तत्र का परिदेवना?॥ ३२॥
अयाचितो मया लब्धो लब्धोऽपि च पुनर्गतः।
यत्राऽऽगतस्तत्र गतस्तत्र का परिदेवना?॥ ३३॥
एकवृक्षे यथा रात्रौ नानापक्षिसमागमः।
प्रभातेऽन्यदिशं यान्ति का तत्र परिदेवना?॥ ३४॥

एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्त्वेकस्त्वरितो याति का तत्र परिदेवना ? ॥ ३५ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि शौनक ! ।
अव्यक्तनिधनान्येव का तत्र परिदेवना ? ॥ ३६ ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेण तु संस्पृष्टः प्राप्तकालो न जीवति ॥ ३७ ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ३८ ॥
आचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्त्तन्ते तथा कर्म पुरा कृतम् ॥ ३९ ॥

शीलं कुलं नैव न चैव विद्या
ज्ञानं गुणा नैव न बीजशुद्धिः ।
भाग्यानि पूर्वं तपसाऽर्जितानि
काले फलन्तीह यथैव वृक्षाः ॥ ४० ॥

तत्र मृत्युर्यत्र हन्ता तत्र श्रीर्यत्र सम्पदः ।
तत्र तत्र स्वयं याति प्रेर्यमाणः स्वकर्मभिः ॥ ४१ ॥
भूतपूर्वं कृतं कर्म कर्त्तारमनुतिष्ठति ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ ४२ ॥
एवं पूर्वकृतं कर्म कर्त्तारमनुतिष्ठति ।
सुकृतं भुङ्क्ष्व चात्मीयं मूढ ! किं परितप्यसे ? ॥ ४३ ॥
यथा पूर्वकृतं कर्म कर्त्तारमनुतिष्ठति ।
एवं पूर्वकृतं कर्म शुभं वा यदि वाऽशुभम् ॥ ४४ ॥
नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ४५ ॥
रागद्वेषादियुक्तानां न सुखं कुत्रचित् द्विज ! ।
विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥ ४६ ॥

यत्र स्नेहो भयं तत्र स्नेहो दुःखस्य भाजनम्।
स्नेहमूलानि दुःखानि तस्मिंस्त्यक्ते महत् सुखम्॥ ४७॥
शरीरमेवाऽऽयतनं दुःखस्य च सुखस्य च।
जीवितञ्च शरीरञ्च जात्येव सह जायते॥ ४८॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥ ४९॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
सुखं दुःखं मनुष्याणां चक्रवत् परिवर्त्तते॥ ५०॥
यद् गतं तदतिक्रान्तं यदि स्यात्तच्च दूरतः।
वर्त्तमाने च वर्त्तेत न च शोकेन बाधितः॥ ५१॥
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः।
कारणादेव जायन्ते मित्राणि रिपवस्तथा॥ ५२॥
शोकत्राणं भयत्राणं प्रीतिविश्वासभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्?॥ ५३॥
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति॥ ५४॥
न मातरि न दारेषु न सोदर्य्ये न चाऽऽत्मजे।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे॥ ५५॥
यदीच्छेत् शाश्वतीं प्रीतिं त्रीणि दोषाणि वर्जयेत्।
द्यूतमर्थप्रयोगञ्च परेषां दारदर्शनम्॥ ५६॥
नात्मच्छिद्रं परे दद्याद्विद्याच्छिद्रं परस्य च।
रक्षन् कूर्म इवाङ्गानि परभावञ्च लक्षयेत्॥ ५७॥

कुचेलिनं दन्तमलापधारिणं
बह्वाशिनं निष्ठुरवाक्यभाषिणम्।
सूर्य्योदये ह्यस्तमयेऽपि शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम्॥ ५८॥

गवां रजो धान्यरजः पुत्त्रस्याङ्गभवं रजः ।
एतद्रजो महाशस्तं महापातकनाशनम् ॥ ५९ ॥
अजारजः खररजो यत्तु सम्मार्जनीरजः ।
एतद्रजो महापापं महाकिल्बिषकारकम् ॥ ६० ॥
शूर्पवातो नखाग्राम्बु स्नानवस्त्रमृजोदकम् ।
केशाम्बु मार्जनीरेणुः हन्ति पुण्यं पुरा कृतम् ॥ ६१ ॥
विप्रयोर्विप्रवह्न्योश्च दम्पत्योः स्वामिनोस्तथा ।
अन्तरेण न गन्तव्यं हयस्य वृषभस्य च ॥ ६२ ॥
स्त्रीषु राजाग्निसर्पेषु स्वाध्याये शत्रुसेवने ।
भोगाऽऽस्वादेषु विश्वासं कः प्राज्ञः कर्त्तुमर्हति ? ॥ ६३ ॥
न विश्वसेदविश्वस्तं विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ ६४ ॥
वैरिणा सह सन्धाय विश्वस्तो यदि तिष्ठति ।
स वृक्षाग्रे प्रसुप्तो हि पतितः प्रतिबुध्यते ॥ ६५ ॥
नात्यन्तं मृदुना भाव्यं नात्यन्तं क्रूरकर्मणा ।
मृदुनैव मृदुं हन्ति दारुणेनैव दारुणम् ॥ ६६ ॥
नात्यन्तं सरलैर्भाव्यं नात्यन्तं मृदुना तथा ।
सरलास्तत्र छिद्यन्ते कुब्जास्तिष्ठन्ति पादपाः ॥ ६७ ॥
नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः ।
शुष्कवृक्षाश्च मूर्खाश्च भिद्यन्ते न नमन्ति च ॥ ६८ ॥
अप्रार्थितानि दुःखानि यथैवाऽऽयान्ति यान्ति च ।
सम्पदश्च तथाऽऽयान्ति क्षणात् यान्ति तथैव च ॥ ६९ ॥
पूर्वं पश्चाच्चरन्त्यार्य्ये सदैव बहुसम्पदः ।
विपरीतमनार्य्ये च यथेच्छसि तथा चर ॥ ७० ॥
षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णश्च धार्य्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्येको न बुध्यते ॥ ७१ ॥

तथा गवा किं क्रियते ? या न दोग्ध्री न गर्भिणी।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ? ॥ ७२ ॥
एकेनापि सुपुत्रेण विद्यायुक्तेन धीमता।
कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा ॥ ७३ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।
वनं सुवासितं सर्वं सुपुत्रेण कुलं यथा ॥ ७४ ॥
एको हि गुणवान् पुत्रो निर्गुणेन शतेन किम् ?।
चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रशः ॥ ७५ ॥
लालयेत् पञ्च वर्षाणि दश वर्षाणि ताड़येत्।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥ ७६ ॥
जायमानो हरेद्दारान् वर्द्धमानो हरेद्धनम्।
म्रियमाणो हरेत् प्राणान्नास्ति पुत्रसमो रिपुः ॥ ७७ ॥
केचिन्मृगमुखा व्याघ्राः केचिद् व्याघ्रमुखा मृगाः।
तत्स्वरूपपरिज्ञाने ह्यविश्वासः पदे पदे ॥ ७८ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ७९ ॥
एतदेवानुमन्येत भोगा हि क्षणभङ्गिनः।
स्निग्धेषु च विदग्धस्य मतयो वै ह्यनाकुलाः ॥ ८० ॥
ज्येष्ठः पितृसमो भ्राता मृते पितरि शौनक !।
सर्वेषां स पिता हि स्यात् सर्वेषामनुपालकः ॥ ८१ ॥
कनिष्ठेषु च सर्वेषु समत्वेनानुवर्त्तते।
समोपभोगजीवेषु यथैव तनयेषु च ॥ ८२ ॥
बहूनामल्पसाराणां समुदायो हि दारुणः।
तृणैरावेष्टिता रज्जुस्तया नागोऽपि बध्यते ॥ ८३ ॥
अपहृत्य परस्वं हि यस्तु दानं प्रयच्छति।
स दाता नरकं याति यस्यार्थस्तस्य तत् फलम् ॥ ८४ ॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ८५ ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ८६ ॥
अकृतज्ञमनार्य्यञ्च दीर्घरोषमनार्जवम् ।
चतुरो विद्धि चाण्डालान् जात्या जायेत पञ्चमः ॥ ८७ ॥
नोपेक्षितव्यो दुर्बुद्धिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽप्यसंग्राह्यः कुरुते भस्मसाज्जगत् ॥ ८८ ॥
नवे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ? ॥ ८९ ॥
उद्यान इव विप्रेन्द्र ! सर्वसाधारणाः श्रियः ।
मदीया इति मत्वा वै न हि हर्षयुतो भव ॥ ९० ॥

चित्तायत्तं धातुवश्यं शरीरं
चित्ते नष्टे धातवो यान्ति नाशम् ।
तस्माच्चित्तं सर्वदा रक्षणीयं
स्वस्थे चित्ते धातवः सम्भवन्ति ॥ ९१ ॥

पराम्नञ्च परस्वञ्च परशय्याः परस्त्रियः ।
परवेश्मनि वासश्च शक्रादपि श्रियं हरेत् ॥ ९२ ॥
आलापाद् गात्रसंस्पर्शात् संसर्गात् सह भोजनात् ।
आसनाच्छयनाद् यानात् पापं संक्रमते नृणाम् ॥ ९३ ॥
आसनादेकशय्याया भोजनात् पङ्क्तिसङ्करात् ;
ततः संक्रमते पापं घटाद् घट इवोदकम् ॥ ९४ ॥
लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्माच्छिष्यञ्च पुत्त्रञ्च ताडयेन्न तु लालयेत् ॥ ९५ ॥
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असम्भोगश्च नारीणां वस्त्राणामातपो जरा ॥ ९६ ॥

अधमाः कलिमिच्छन्ति सन्धिमिच्छन्ति मध्यमाः।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ ८७ ॥
मानो हि मूलमर्थस्य माने सति धनेन किम्?।
प्रभ्रष्टमानदर्पस्य किं धनेन किमायुषा? ॥ ८८ ॥
अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ ८९ ॥
वनेऽपि सिंहा न नमन्ति कर्णं बुभुक्षिताः स्वल्पनिरीक्षणाश्च।
धनैर्विहीनाः सुकुलेषु जाता न नीचकर्माणि समारभन्ते ॥१००॥
नाभिषेको न संस्कारः सिंहस्य क्रियते वने।
नित्यमूर्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १०१ ॥
दाता दरिद्रः कृपणोऽर्थयुक्तः पुत्रोऽविधेयः कुजनस्य सेवा।
परापकारेषु नरस्य मृत्युः प्रजायते दुश्चरितानि पञ्च ॥ १०२ ॥
चिन्तासहस्रेषु च तेषु मध्ये चिन्ताश्चतस्रोऽप्यसिधारतुल्याः।
नीचापमानं क्षुधितं कलत्रं भार्या विरक्ता सहजोपरोधः ॥१०३॥
वश्यश्च पुत्रोऽर्थकरी च विद्या अरोगिता सज्जनसङ्गतिश्च।
इष्टा च भार्या वशवर्त्तिनी च दुःखस्य मूलोद्धरणानि पञ्च ॥१०४॥
कुरङ्गमातङ्गपतङ्गभृङ्गा मीना हताः पञ्चभिरेव पञ्च।
एकः प्रमाथी स कथं न घात्यो यः सेवते पञ्चभिरेव पञ्च ॥१०५॥
अधीरः कर्कशः स्तब्धः कुचेलः स्वयमागतः।
पञ्च विप्रा न पूज्यन्ते बृहस्पतिसमा यदि ॥ १०६ ॥
आयुः कर्म चरित्रञ्च विद्या निधनमेव च।
पञ्चैतानि विविच्यन्ते जायमानस्य देहिनः ॥ १०७ ॥
पर्वताऽऽरोहणे तोये गोकुले दुष्टनिग्रहे।
पतितस्य समुत्थाने शस्ताः ह्येते गुणाः स्मृताः ॥ १०८ ॥
अस्थिरं जीवितं लोके अस्थिरं धनयौवनम्।
अस्थिरं पुत्रदाराद्यं धर्मः कीर्त्तिर्यशः स्थिरम् ॥ १०९ ॥

शतं जीवितमत्यल्पं रात्रिस्तस्यार्द्धहारिणी ।
व्याधिशोकजराऽऽयासैरर्द्धं तदपि निष्फलम् ॥ ११० ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं हृतं
तस्यार्द्धं स्थितकिञ्चिदर्द्धमधिकं बालस्य काले हृतम् ।
किञ्चिद्बन्धुवियोगदुःखमरणैर्भूपालसेवागतं
शेषं वारितरङ्गगर्भचपलं मानेन किं मानिनाम् ? ॥ १११ ॥

अहोरात्रिमये लोके जरारूपेण सञ्चरन् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ ११२ ॥

गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतो न चेत् ।
कार्य्यं सत्त्वहितार्थाय तत् पशोरिव चेष्टितम् ॥ ११३ ॥

अहितहितविचारशून्यबुद्धेः हितकरणे बहुभिर्वितर्कितस्य ।
उदरभरणमात्रतुष्टबुद्धेः पुरुषपशोः पशोश्च को विशेषः ? ॥११४॥

शौर्य्ये तपसि दाने च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ११५ ॥

यज्जीवितं क्षणमपि प्रथितं मनुष्यैः
विज्ञानविक्रमयशोभिरभग्नमानैः ।
तन्नाम जीवितमिति प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ ११६ ॥

किं जीवितेन धनमानविवर्जितेन ?
मित्रेण किं भवति नित्यसशङ्कितेन ? ।
सिंहव्रतं चरत गच्छत मा विषादं
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ ११७ ॥

यो वाऽऽत्मनीह न गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च मित्रवर्गे ।
किं तस्य जीवितफलेन मनुष्यलोके ?
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ ११८ ॥

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लौहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ११९ ॥
स्वाधीनवृत्तेः साफल्यं न पराधीनवृत्तिता ।
ये पराधीनकर्माणो जीवन्तोऽपि च ते मृताः ॥ १२० ॥
सुपूरा वै कापुरुषाः सुपूरो मूषिकाञ्जलिः ।
असन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १२१ ॥
अभ्रच्छाया तृणादग्निर्नीचसेवा पथे जलम् ।
वेश्यारागः खले प्रीतिः षडेते बुद्बुदोपमाः ॥ १२२ ॥
वाचा विहितसार्थेन लोको न च सुखायते ।
जीवितं मानमूलं हि माने म्लाने कुतः सुखम् ?॥ १२३ ॥
अबलस्य बलं राजा बालस्य रुदितं बलम् ।
बलं मूर्खस्य मौनत्वं तस्करस्यानृतं बलम ॥ १२४ ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथाऽस्य मेधा स्याद्विज्ञानञ्चास्य रोचते ॥ १२५ ॥
यथा यथा हि पुरुषः कल्याणे कुरुते मतिम् ।
तथा तथा हि सर्वत्र श्लिष्यते लोकसुप्रियः ॥ १२६ ॥
लोभप्रमादविश्वासैः पुरुषो नश्यति त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो नो न विश्वसेत् ॥ १२७ ॥
तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
उत्पन्ने तु भये तीव्रे स्थातव्यं वै ह्यभीतवत् ॥ १२८ ॥
ऋणशेषञ्चाग्निशेषं व्याधिशेषं तथैव च ।
पुनः पुनः प्रवर्द्धन्ते तस्माच्छेषं न कारयेत् ॥ १२९ ॥
कृते प्रतिकृतं कुर्य्यात् हिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दोषं समाचरेत् ॥ १३० ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं मायामयमरिन्तथा ॥ १३१ ॥

दुर्जनस्य हि सङ्गेन सुजनोऽपि विनश्यति ।
प्रसन्नमपि पानीयं कर्दमैः कलुषीकृतम् ॥ १३२ ॥

सम्यक् भुङ्क्ते जनः सो हि द्विजायार्थो हि यस्य वै ।
तस्मात् सर्वप्रयत्नेन द्विजः पूज्यः प्रयत्नतः ॥ १३३ ॥

तद् भुज्यते यद् द्विजभुक्तशेषं
स बुद्धिमान् यो न करोति पापम् ।
तत् सौहृदं यत् क्रियते परोक्षे ।
दम्भैर्विना यः क्रियते स धर्मः ॥ १३४ ॥

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तत् यच्छलनाऽनुविद्धम् ॥ १३५ ॥

ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव तेजसाम् ।
शिरोऽपि सर्वगात्राणां व्रतानां सत्यमुत्तमम् ॥ १३६ ॥

तन्मङ्गलं यत्र मनः प्रसन्नं तज्जीवनं यत्र परस्य सेवा ।
तदर्जितं यत् स्वजनेन भुक्तं तद् गर्जितं यत् समरे रिपूणाम् ॥ १३७ ॥

अम्भसः परिमाणेन उन्नतं कमलं भवेत् ।
स्वस्वामिना बलवता भृत्यो भवति गर्वितः ॥ १३८ ॥

स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ ॥ १३९ ॥

स्थाने स्थितस्य मित्रत्वमस्थाने रिपुतां गतम् ।
भानोः प्रीतिर्जलस्थाब्जे रिपुता स्थलवर्त्तिनि ॥ १४० ॥



## सप्तदशः पाठः।

सदाचारः।

मैत्रीं सद्भिः समं कुर्य्यात् स्नेहं सत्सु तु सर्वथा।
संसर्गं साधुभिः कुर्य्यादसत्सङ्गं परित्यजेत्॥
सेवेत देवभूदेववृद्धवैद्यनृपातिथीन्।
विमुखान्नार्थिनः कुर्य्यान्नावमन्येत कानपि॥
गुरूणां सन्निधौ तिष्ठेत् सदैव विनयान्वितः।
पादप्रसारणादीनि तत्र नैव समाचरेत्॥
अपकारपरेऽपि स्यादुपकारपरः पुमान्।
आत्मवत् सकलान् पश्येद्वैरिणो दूरतो वसेत्॥
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम्।
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः॥
नात्मानमुदके पश्येत् न नग्नः प्रविशेत् जलम्।
तथा नाज्ञातगाम्भीर्य्यं न हिंस्रप्राणिसेवितम्॥
काले हितं मितं सत्यं संवादि मधुरं वदेत्।
भुञ्जीत मधुरप्रायं स्निग्धं काले हितं मितम्॥
न रात्रौ दधि भुञ्जीत न च निर्लवणान्तथा।
नासुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम्॥
जनस्याऽऽशयमालक्ष्य यो यथा परितुष्यति।
तं तथैवानुवर्त्तेत पराऽऽराधनपण्डितः॥
नैकः सुखी न सर्वत्र विश्वस्तो न च शङ्कितः।
नोद्यमे विरमेत् क्वापि हेतावीर्षेत् फले न तु॥
न वेगान् धारयेज्जातु मनोवेगान् विधारयेत्।
न पीड़येदिन्द्रियाणि न चैतानति लालयेत्॥
वर्षाऽऽतपादिषु छत्री दण्डी रात्रौ भयेषु च।
सोपानत्कस्तनं रक्षेत् विचरेत् युगमात्रदृक्॥

नदीं तरेत् न बाहुभ्यामाग्निस्कन्धमभिव्रजेत् ।
सन्दिग्धनावं वृक्षञ्च नारोहेद् दुष्टयानकम् ॥
नासंवृतमुखं कुर्य्यात् सभायाञ्च विचक्षणः ।
कासं श्वासं तथोद्गारं जृम्भणं क्षवथुं तथा ॥
नोर्द्ध्वजानुश्चिरन्तिष्ठेत् न नखेन लिखेद्भुवम् ।
सम्मार्जनीरजो नैव देहे दद्यात् कदाचन ॥
न नखेन तृणं छिन्द्यात् नोच्छिष्टो ब्राह्मणं स्पृशेत् ।
नोपरक्तं न चोद्यन्तं नास्तं यातं दिवाकरम् ॥
सर्वथा न समीक्षेत न जले प्रतिविम्बितम् ।
नेक्षेत सततं सूक्ष्मं दीप्तमेध्याप्रियाणि च ॥
पौरन्दरं धनुर्नैव दर्शयेत् कमपि क्वचित् ।
नेच्छेद् बलवता युद्धं न भारं शिरसा वहेत् ॥
गात्रं न नाडयेत् क्रोशात् हस्तेन धनुषाथ च ।
न गच्छेत् पूज्ययोर्मध्ये दम्पत्योरन्तरेण च ॥
रिपोरन्नं न भुञ्जीत गणिकाऽन्नमपि क्वचित् ।
प्रतिभूर्न भवेत् क्वापि न च साक्षी वृथा भवेत् ॥
कार्णीं न धारयेज्जातु द्यूतं दूरात्परित्यजेत् ॥
विश्वासं नाचरेत् स्त्रीणां ताः स्वतन्त्राश्च नाचरेत् ।
रक्षणीयाः सदा यत्नाद् यौवने तु विशेषतः ॥
न भिन्ने शयने सुप्यात् नानेकविवरेऽपि च ।
नैको देवालये नैव रात्रौ तरुतलेऽपि च ॥
एवं दिनानि गमयेत् सदाचारपरः सदा ।
ततो रात्रिप्रयुक्तानि कुर्य्यात् कर्माणि मानवः ॥
इत्याचारं समासेन भाषितं यः समाचरेत् ।
स विन्दत्यायुरारोग्यं प्रीतिं धर्मं धनं यशः ॥

सम्पूर्णः ।

# SANSKRIT SIKSHAMANJARI

PART III

OR

SANSKRIT THIRD BOOK,

SUITED TO BEGINNERS

BY

PANDIT-KULAPATI

SHRI JIBANANDA VIDYASAGARA. B. A.

*Superintendent, Free Sanskrit College, Calcutta.*



*Third Edition.*

**Calcutta.**

PRINTED BY SIDDHESWAR PAN

AT THE SIDDHESWAR PRESS.

*38. Shibnarayan Dass's Lane.*

1901.



To be had from

Pandit-kulapati Shri Jibánanda Vidyáságara, B. A.

Superintendent, Free Sanskrit College,

No. 2, Rama'-natha Majumda'r's Street, Calcutta.

# संस्कृतशिक्षामञ्जर्य्याः

## तृतीयभागः ।



पण्डितकुलपतिना
वि, ए, उपाधि-धारिणा
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण
सङ्कलितः ।



द्वितीय संस्करणम् ।

कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे
मुद्रितः ।



इं १९०१ ॥

# संस्कृतशिक्षामञ्जर्य्याः

## तृतीयो भागः ।

### प्रथमोच्छ्वासः ।

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
बालानां ज्ञानवृद्ध्यर्थं शिक्षामञ्जरी रच्यते ॥

अस्ति मगधो नाम महान् जनपदः । तत्रासीत् पुष्पपुरी नाम नगरी । राजहंसो नाम महाप्रतापस्तस्यां राजा बभूव । तस्य वसुमतीनाम्नी महादेवी परमविधेया धर्म्मपालपद्मोद्भवसितवर्म्मनामधेयास्त्रयोऽमात्याश्चासन् । तेषाञ्च धर्म्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवौ, सितवर्म्मणः सुमतिसत्यवर्म्माणौ इति सूनवः समभवन् । तेषु धर्म्मशीलः सत्यवर्म्मा संसारस्य असारतां बुद्ध्वा तीर्थयात्रार्थं देशान्तरमगमत् । कामपालः वारनारीपरो दुर्विनीतः पितुरग्रजस्य च शासनमतिक्रम्य भुवं बभ्राम । रत्नोद्भवः वाणिज्यार्थं समुद्रपारगमनमकार्षीत् । अपरे सुमन्त्रसुमित्रसुश्रुतसुमतयः पितृषु सुरलोकमितेषु यथापूर्वमन्वतिष्ठन् ।

एकदा मगधाधिपतिः मालवेन्द्रं मानसारं जिगीषुर्महता बलसमुदायेन संग्रामभूमिमवातरत् । सोऽपि चतुरङ्गबलोद्रिक्तः सविग्रहो दर्प इव तमभिजगाम । तयोश्च अस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं महत् जन्यमजनि ।

वरयति एव अधन इति अदत्त्वा अर्थपतिनाम्ने अपरस्मै यथार्थनाम्ने सार्थवाहाय पुनर्दित्सति पिता। तदमङ्गलस्य अद्य प्रभाते भावित्वात् प्रागेव प्रियतमदत्तसङ्केता वञ्चित-स्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना तद्गृहमभिसरामि, तन्मां मुञ्च, गृहाण एतदलङ्कारजातमिति उन्मुच्य मह्यम् अर्पितवती सदयमब्रवं ताम् एहि साध्वि! नयेयं त्वां त्वत्-प्रियतमावासमिति त्रिचतुराणि पदानि अगच्छम्।

अत्रान्तरे सहसा नागरिकबलं दीपिकालोकध्वस्ततिमिर-मनल्पं यष्टिकृपाणपाणि समापतत्। कम्पमानां कन्यका-मवदं भद्रे! मा भैषीः अस्ति अयम् असिद्वितीयो बाहुः। परं त्वदर्थे मृदुरयमुपाय उद्भावितः, अहं सर्पदष्ट इव शयी, त्वया अमी वाच्याः भद्राः! निशि वयमिमां पुरीं प्रविष्टाः, ममैष पतिर्भुजङ्गदष्टः, यदि वः कश्चित् मन्त्रवित् कृपालुः एनं जीवयेत् तदाहमनाथा जीवामीति। सापि बाला उपा-यान्तरमपश्यन्ती रुदती तथैवान्वतिष्ठत्। तेषु कश्चित् विषवैद्याभिमानी मां निर्वर्ण्य मुद्रातन्त्रादिभिरुपायैः उपक्रम्य अकृतार्थः, गत एवायं कालदष्टः, शुचा अलं वासु! श्वोऽग्निसात् करिष्यते कोऽतिवर्त्तते दैवमिति सहेतरैः प्रायात्।

अहञ्च उत्थितः उदारकाय तां नीत्वा अवोचं भद्र! अह-मस्मि कश्चित् तस्करः त्वद्गतेन मनसा त्वामभिसरन्तीमेना-मन्तरे प्राप्य त्वत्समीपमुपानैषम् इदञ्चास्या अलङ्कारजात-मिति तत् सर्वमर्पितवान्। स च तदादाय लज्जाहर्षसम्भ्रम-समन्वितः प्राब्रवीत् आर्य्य! नाथ किमपि वक्तुं जानामि यदद्य त्वया कृतं तस्य निष्क्रयो नास्ति, न एतादृशं केनापि कृतपूर्वं नापि क्रियते न च करिष्यते, तदिदानीम् एताक-

देव वार्त्तं यदद्य प्रभृति भर्त्तव्योऽयं दासजन इति मम पादयोः अपतत्।

अहञ्चोत्थाप्य तं गाढ़माश्लिष्य अब्रवं भद्र! काद्य ते प्रतिपत्तिरिति। सोऽभ्यधत्त "सौम्य! न शक्नोमि चैनामत्र नगरे पित्रोः अनुज्ञया विना उपयम्य जीवितुम् अतोऽस्यामेव रजन्यां, देशमिमं त्यजामि अथवा कोवा अहं यथा तुभ्यं रोचते इति मयोक्तं स्वदेशो विदेशो वेति नेयं गणना विदग्धस्य, किन्तु बाला अनल्पसौकुमार्य्या इयं कष्टाः विघ्नबहुलाश्च कान्तारपथाः, ईदृशेन देशत्यागेन अनर्थकरेण प्रव्रासस्त्वयोः शैथिल्यमिव प्रतिभाति। तत् सहैव अनया अत्र नगरे सुखं वस्तव्यम्। एहि नयावैनां स्वमावासमिति तेन च अविचार्य्यैव अनुमोदमानेन सद्य एव तां स्वगृहं नीत्वा तयैव अपसर्पभूतया तत्पितृगृहे सर्वं द्रव्यजातं तदनन्तरमर्थपतिभवनं गत्वा तत्रत्यं सर्वस्वं चोरयित्वा स्वगृहं गत्वा शयनमाश्रितश्च।

ततश्च उदिते भगवति गभस्तिमालिनि मिहिरे उत्थाय आवां धौतवस्त्रौ प्रातःकृत्यमनुष्ठाय अस्मत्कर्मतुमुलं नगरमनुविचरन्तौ वरवधूगृहेषु कोलाहलमशृणवम्। अथ अर्थैः कुबेरदत्तमाश्वास्य तत् कन्याविवाहं मासावधिकमकल्पयत्। अत्रान्तरे धनमित्रमहमभिचयं सखे! चर्मरत्नभस्त्रिकां कल्पयित्वा एकान्ते राजानम् अङ्गराजमाचक्ष्व जानात्येव देवो महाधनस्य वसुमित्रस्य पुत्रं धनमित्रं मां मय्यर्थनाशात् दरिद्रे मदर्थमेव संवर्द्धितां कुलपालिकां नाम कन्यां तत्पिता कुबेरदत्तः अर्थपतये दित्सतीति ज्ञात्वा वैराग्यात् प्राणान् विहातुं अरण्यं गत्वा कण्ठन्यस्तपाशः केनापि कृपालुना जटाधरेण निवार्य्य एवमुक्तः किमिति अकार्य्यं क्रियते इति मयोक्तं लोकावमानसोदर्य्यात् दारिद्र्यात्। स पुनरब्रवीत्

मूढोऽसि, नान्यत् पापतमम् आत्मघातात् आत्मानमात्मनैव अनवसाद्योद्धरन्ति सन्तः सन्ति उपाया बहवो धनार्जनस्य न एकोऽपि छिन्नकण्ठप्रतिसन्धानस्य। मया मन्त्रबलेन एका चर्मरत्नभस्त्रिका लक्षग्राहिणी अधिगता, तामिमां दयमानस्तुभ्यं ददामि, प्रतिगृहाण, मदन्यत्र चेयं वणिग्भ्यो वाराङ्गनाभ्यश्च दुग्धे। किन्तु यत्सकाशात् अन्यायापहृतं तत् तस्मै प्रत्यर्पणीयं न्यायार्जितन्तु देवब्राह्मणेभ्यो देयम्। ततश्चेयं देवता इव शुचौ देशे निवेश्य अर्च्यमाना प्रातः प्रातः-सुवर्णपूर्णेव दृश्यते इति अस्याः कल्प इत्यभिधाय कृताञ्जलये मह्यम् एनां दत्त्वा अन्तर्दधे। इयञ्च रत्नभूता चर्मभस्त्रिका देवाय अनिवेद्य नोपजीव्या इति आनीता, तदत्र देवः प्रमाणमिति। राजा च नियतमेवं वक्ष्यति भद्र! प्रीतोऽस्मि, गच्छ यथेच्छमेनामुपभुङ्क्ष्वेति। भूयश्च ब्रूहि यथा न कश्चिदेनां न मुष्णाति तथानुगृह्यतामिति। सोऽवश्यं तदपि अभ्युपेष्यति। ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने पूज्यमानांस्तेयलब्धै रर्थैनैक्तमापूर्य्य एनां प्रातः लोकाय दर्शयिष्यसि, ततः कुवेरदत्तस्तृष्णाय मत्वा अर्थपतिं कन्यकां स्वयमेव तुभ्यं प्रदास्यति। यदि कुपितोऽर्थपतिः अर्थगर्वात् अभियोक्ष्यते तमपि विविधैः उपायैः कौपीनावशेषं करिष्यावः। स्तकञ्च चौर्य्यमनेनैव प्रच्छन्नं भविष्यतीति।

धनमित्रस्तथैव प्रहृष्टश्चान्वतिष्ठत्। तदहरेव मदादेशात् विमर्दकोऽर्थपतिसेवानियुक्तः तस्य उदारके वैरमवर्द्धयत्। अर्थलुब्धश्च कुवेरदत्तः धनमित्राय एव तनयां प्रादिक्षत् प्रत्यबध्नात् च अर्थपतिः।

अत्रान्तरे काममञ्जर्य्याः कनीयसी स्वसा रागमञ्जरी मां कथमपि चकमे। अहञ्च तद्गुणाकृष्टः नितरां तदनुरक्तः

सञ्जातः । सा च गुणानुरागिणी नार्थाकाङ्क्षिण्येव मयि अनुरागमकरोत् परं तद्भगिनी काममञ्जरी माता च माधवसेना विना शुल्कं मत्प्रवेशं न्यवारयत् । अहन्तु काममञ्जर्य्या दासीं धर्मरक्षितां नाम अर्थेनावर्ज्य तन्मुखेन तया बन्धक्या पणबन्धमकरवं यथा चर्मरत्नं धनमित्रात् मुषित्वा मया तुभ्यं देयमिति ततस्तस्यां तथेति प्रतिपन्नायां तथा तमर्थं सम्पाद्य रागमञ्जरोमग्रहीषम् । यस्याञ्च निशि चर्म-रत्नस्तेयवादः, तस्याः प्रारम्भे मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रं बहु अतर्जयत् । धनमित्रेणोक्तं भद्र ! कस्तवार्थः यत् परस्यार्थे माम् आक्रोशसि किन्ते मयापकृत-मिति । स भूयोऽपि तर्जयन्निव अब्रवीत् स एष धनगर्वो नाम यत् परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीकर्त्तुमिच्छसि ब्रवीषि च कस्तव अपकारो मत्-कृत इति । ननु प्रतीतमेव एतत् विमर्दकोऽर्थपतेर्वहिश्चराः प्राणा इति अहं तदर्थं प्राणान् अपि न गणयामि ब्रह्महत्यामपि न गणयामि मम एकरात्रजागरप्रतीकारः तव एष चर्मरत्नाह-ङ्कारदाहज्वर इति तथा ब्रुवाणश्च पौरैः सामर्षं निवार्य्य ताड़ितो गतोऽभूत् ।

धनमित्रेण च आर्त्तेन इव इयं वार्त्ता पार्थिवाय, प्रागेव निवेदिता । स च अर्थपतिमाहूय एकान्तेऽपृच्छत् अङ्ग ! अस्ति कश्चिद् विमर्दको नाम तव ? । तेन च मूढ़ात्मना अस्ति देव ! परं मित्रमिति । अथ राज्ञोक्तं तेन किञ्चित् प्रयोजनमस्ति तमाह्वय, अथ स स्वगृहमेत्य नानास्थानेषु तमन्वेष्टुमारब्धः, न च कुत्रापि प्राप । कथं न लभ्यते स खलु तदहरेव मदादेशात् त्वदन्वेषणार्थम् उज्जयिनीं गतः । अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधं स्वमेव मत्वा मोहान्नयात्

वा प्रत्याख्याय पुनर्धनमित्रविभावितेन राज्ञा निगृह्य निगड़-बन्धनमनीयत।

तेषु च दिवसेषु कल्पोक्तेन विधिना चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणकीभूतं विरूपकं रहसि गत्वा ततोऽपहृतं सर्वमर्थं तस्मै प्रत्यर्पयामास। सोऽपि कथञ्चित् क्षपणकग्रहमोचितात्मा मया उपदिष्टोऽतिप्रीतः स्वधर्ममेव प्रत्यपद्यत। काममञ्जर्य्यपि अजिनरत्नदोहेच्छया स्वमभ्युदयं निःशेषम् अकरोत्।

अथ मदादिष्टो धनमित्रः पार्थिवं मिथो व्यजिज्ञपत् देव! वारमुख्या काममञ्जरी नितरां धनलुब्धा अद्य सर्वस्वं निर-पेक्षं वितरति, तन्मन्ये मदीयचर्मरत्नलाभोऽस्य हेतुः, अस्याश्च तादृश एव कल्प इति पूर्वमुक्तं तदमुष्यामस्ति मे शङ्का इति। राजा तु सद्य एव तां तज्जननीं च समाजुहाव।

अहन्तु सविषादमिव रहसि तामकथयं आर्य्ये! नूनं सर्वस्वत्यागात् अतिप्रकाशात् आशङ्कनीयचर्मरत्नलाभासि, तद्वार्त्ताप्रश्नाय राज्ञा समाहूयसे पुनः पुनश्च आग्रहेण पृष्टया त्वया नियतमेव तदागतित्वेनाहमपदेश्यः ततश्च भावी मम चित्रवधः मृते च मयि न जीविष्यति एव ते भगिनी, त्वञ्च निःस्वीभूता, चर्मरत्नञ्च धनमित्रमेव भजिष्यति। तदियमापद् समन्ततोऽनर्थानुबन्धिनी, तदत्र उपायश्चिन्त्यताम् इति। तया तन्माता च अश्रूणि विमुच्य उक्तम् अस्मद्बालिश्यात् निर्भिन्नं रहस्यं परमर्थपतौ तदयशो रूढं तेन च अस्माभिः सङ्गतेन तदस्मभ्यं दत्तमिति अपदिश्य अलमात्मानं शोधयितुमिति माम् उक्त्वा राजान्तिकमगमताम्।

राज्ञा निर्बन्धेन पृष्टे च पुनः पुनः कर्णनासाच्छेदभीषिते तमेवार्थपतिं तदागतित्वेन प्रकटितवत्यौ। कुपितं राजानं

तस्य प्राणेषु दयमानं धनमित्रः प्राञ्जलिर्निपत्य अब्रवीत् देव! मौर्य्यदत्त एष वरः वणिजां दृष्टेषु अपराधेषु नास्य-सुभिरभियोगः, वरं हृतसर्वस्वो निर्वासनीय एष इति। तेन च राजा सन्तुतोष धनमित्रञ्च लोकाः प्राशंसन्। अर्थपतिश्च कौपीनावशेषः सर्वजनसमक्षं निरवास्यत। तद्द्रव्याणाञ्च केनचिदंशेन निःस्वा काममञ्जरी धनमित्रानुरुद्धेन राज्ञा सानुकम्पमनुगृहीता। धनमित्रश्च शुभे दिने कुलपालिकां परिणीतवान्।

एवं सिद्धकामेन मया लुब्धसमृद्धवर्गस्तथा मुषितः यथा कपालपाणिः स्वैरेव धनैर्मद्दत्तैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत्।

न हि अतिनिपुणोऽपि जनो नियतिमतिक्रमितुं शक्नोति। एकदा अहं सुरापानमत्तः रागमञ्जरीगृहात् शृगालिकया नाम तद्दास्या अनुगम्यमानो रजन्यां राजवीथ्यामटन् नागरिकबलैः तस्कर इति अभिहन्यमानः पाणिस्थितेन निस्त्रिंशेन द्वित्रान् निहत्य अवघूर्णमाणताम्रदृष्टिरपतम्। आगमञ्च ममाभ्यासं शृगालिका आर्त्तरवान् विसृजन्ती। आपदा तु मत्ततापहारिण्या सद्य एव बोधितो व्यचिन्तयम् अहो! मोहोऽयं मम, प्रकृततरञ्च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वञ्च रागमञ्जर्य्याः, मत्पापेन च तौ ध्रुवो निग्राह्यि-ष्येते तदत्र तादृक् उपायः कर्त्तव्यः यथा तौ न आपदमाप्नुतः, अहञ्चानर्थात् मोक्ष्ये इति विविच्य शृगालिकामब्रवम् अपेहि जरतिके! या तामर्थलुब्धां दग्धगणिकां रागमञ्जरीम् अजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण सङ्क्रमित-वती, सा हतासि, तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारात् अहमद्य एभिर्हन्तो जिहासासि प्राणा-

निति सा तु परमधूर्त्ता साश्रुगद्गदं तान् रक्षिकपुरुषान् मम पुरतः सविनयमब्रवीत् भद्राः प्रतीक्षन्तां कञ्चित् कालं यावत् अस्मात् अस्मदीयं सर्वं मुषितमवगच्छेयमिति तथेति तैः प्रतिपन्ने मामासाद्य अवादीत् सौम्य! क्षमस्व अस्य दासीजनस्य एकमपराधम् अस्तु स त्वत्कलत्राभिमर्षी वैरास्पदं धनमित्रः, स्मरंस्तु चिरकृतां परिचर्य्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम्। तद् ब्रूहि क्व निहितमस्या भूषणजातमिति ततोऽहं दयमान इवाब्रवं भवतु मृत्युहस्तपतितस्य किं ममामुष्यां वैरानुबन्धेनेति कर्ण एव एनाम् अशिक्षयम् एवमेवं प्रतिपत्तव्यमिति। सा तु प्रतिपन्नार्था जीव वत्स! चिरमिति अभिधाय क्षणात् प्रासरत्। रक्षिभिश्चाहमनीये बन्धनगृहम्।

उत्तरेद्युः आगत्य हृष्टतरः सुभगमानी सुन्दरम्मन्यः युवा कान्तको नाम काराध्यक्षः किञ्चित् इव भर्त्सयित्वा मामभ्यधात् चेद्धनमित्रस्य अजिनरत्नं रागमञ्जरीभूषणजातञ्च प्रयच्छसि, द्रक्ष्यसि पारमष्टादशानां कारणानाम् अन्ते च मृत्युमुखमिति। मया तु ईषत् हसता अभिहितं यद्यपि दद्यामाजन्मनो मुषितमर्थजातं, न तु अर्थपतिदारापहारिणः शत्रोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयमिति मे द्रढीयसी सन्धेति।

अथ कदाचित् दिनावसाने शृगालिका समेत्य सहर्षं माम् अब्रवीत् सौम्य! फलिता ते सुनीतिः। यथा त्वयादिष्टास्मि, तथा धनमित्रमित्यब्रवम् आर्य्य! तव एवमापन्नः सुहृत् इत्युवाच अहमद्य पानदोषात् बद्धः, त्वया तु निःशङ्कम् अद्यैव राजा विज्ञापनीयः, देव! देवप्रसादात् एव पुनरपि तत् अजिनरत्नमर्थपतिमुषितम् आसादितम्, अथ तु भर्त्ता रागमञ्जर्य्याः कश्चिदवधूर्त्तः कथञ्चित् मया सख्यमबध्नात्।

तत्सम्बन्धात् वस्त्राभरणादिना सन्तोष्य तद्भार्य्या रहसि मया प्रतिदिनमन्ववर्त्ति, तदसौ अयङ्किष्ट, कुपितश्च मम तत् अजिन-रत्नं तस्याश्च आभरणजातममुष्णात्। साम्प्रतं भूयस्तेयाय भ्रमन्नग्टह्यत नागरिकबलैः। आपन्नेन च तेन वदत्यै राग-मञ्जरीपरिचारिकायै पूर्व्वप्रणयानुवर्त्तिना तद्भूषणनिधानो-द्देशः कथितः, ममापि चर्म्मरत्नं यथा प्रयच्छेत् तथा देवपादै-रनुग्रहः कार्य्य इति तथा निवेदितश्च राजा माममुभिरवि-योज्य सान्त्वनेनैव स्वं तं दापयितुं यतिष्यते तन्नः पथ्यमिति। श्रुत्वैव त्वदनुभावप्रत्ययादवस्तेन तेन तत्तथैव सम्पादितम्। अथाहं रागमञ्जर्य्याः सकाशात् यथेप्सितानि वस्तूनि आदाय त्वदादिष्टेन मार्गेण राजदुहितुरम्बालिकाया धात्रीं माङ्ग-लिकीमनुरञ्जयन्ती तामिव संक्रमीकृत्य रागमञ्जर्य्याश्चाम्बालि-कायाश्च सख्यमवर्द्धयम्। क्रमेण तत्समीपगतागतेन अहं तस्याः परं प्रसादपात्रमासम्। एकदा च तस्याः स्थानस्थित-मपि कर्णकुवलयं स्रस्तमिति प्रतिसमादधती प्रमत्तेव भ्रंश-यित्वा पुनरुत्क्षिप्य भूमेः तेन, केनापि कारणेन कन्यकान्तः-पुरं प्रविष्टस्य कान्तकस्य उपरि पारावतत्रासनापदेशात् प्रह-सन्ती प्राहृतवती। सोऽपि किञ्चिदुन्मुखः स्मयमानो मत्कर्म-प्रहासितायाः राजदुहितुर्विलासप्रायमाकारमात्माभिलाषमूल-मिव यथा तर्कयेत् तथा मयापि संज्ञयैव किमपि चतुर-माचेष्टितम्। स तु कामपरवश इव कथं कथमपि कन्यका-गारादपासरत्।

अथाहं सायं राजकन्याङ्गुरीयकमुद्रितां वासताम्बूलादि-गर्भां पेटिकां रागमञ्जर्य्यै प्रेषितां नीत्वा कान्तकागारमगाम्। स च अगाधे प्रेमसागरे मग्नो नावमिव मामासाद्य परम-हृष्यत्। अवस्थान्तराणि च राजकन्यायाः सुदारुणानि

वर्णयन्त्या मया स दुर्मतिः सुदूरम् उदमाद्यत। इत्थञ्च सम्भुच्चितकामाग्निरेकान्ते स मयोक्तः आर्य्य! मम प्रतिवेशी कश्चित् सामुद्रिकः तव सुलक्षणानि दृष्ट्वा मामेकान्तेऽवदत् यथा राज्यमिदं कान्तकस्य हस्ते पतिष्यतीति। तदनुरूपञ्च राजकन्या त्वां कामयते तदेकापत्यश्च राजा तया सङ्गतञ्च त्वामुपलभ्य कुपितोऽपि नोच्छेत्स्यति प्रत्युत ग्राहयिष्यत्येव तुभ्यं राज्यं तदेवमर्थोऽर्थान्तरानुबन्धी कथं न अनुष्ठीयते, यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे, ननु काराभित्तेः व्यामत्रयमन्तरालमारभ्य प्राकारस्य केनचित् निपुणेन तस्करेण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्य उपवनं तवोपरि अस्मदायत्तैव रक्षा। रक्ततरश्च तस्याः परिजनो रहस्यं न भेत्स्यतीति।

सोऽब्रवीत् भद्रे! साधूक्तम् अस्ति कश्चित् तस्करः खननकर्मणि सुनिपुणः, स चेत् लब्धः क्षणेन एतत् कर्म साधयिष्यतीति, कोऽसौ कथं न लभ्यते इति मयोक्ते स येन तद्वनमित्रस्य चर्मरत्नं मुषितं स इति त्वामेव निरदिक्षत्। यदि एवम् एहि त्वया अस्मिन् कर्मणि साधिते चित्रैरुपायैस्त्वामहं मोचयिष्यामीति शपथम् कृत्वा तेन सह सन्धाय सिद्धेऽर्थे भूयोऽपि निगड़यित्वा चौरोऽयं सर्वथा उपक्रान्तोऽपि न तत् अजिनरत्नं दर्शयिष्यति, इति राज्ञे विज्ञाप्य चित्रमेनं घातयिष्यसि, तथा सति अर्थः सिद्ध्यति रहस्यञ्च न भेत्स्यतीति मया उक्ते सोऽतिहृष्टः तथा इति प्रतिपद्य मामेव त्वत्प्रलोभने नियुज्य वहिरवस्थितः, किमतःपरं विधेयं चिन्त्यतामिति।

प्रीतेन मया उक्तं मदुक्तमल्पं तवय एव अत्र महान् आनय एनमिति। अथानीतोऽयं मन्मोचनाय शपथं कृतवान् अहञ्च रहस्यानिर्भेदाय। ततोऽहं छिन्नबन्धनः काराभित्तिकोणा-

दारभ्य उरमास्येन सुरङ्गां कृत्वा अचिन्तयं जिघांसुना एव अमुना मन्मोचनाय शपथः कृतः, तदमुं हत्वापि न दोषेण लिप्ये इति निष्पतत एव मे निगडनाय प्रसार्य्यमाणपाणेस्तस्य पादेन उरसि प्रहृत्य पतितस्य तस्यैव छुरिकया शिरो न्यकृन्तम्। ततश्च शृगालिकामुखेन कन्यान्तःपुरसन्निवेशं ज्ञात्वा अमुतः किञ्चित् चोरयित्वा निर्वर्त्तिष्ये इति मनसि कृत्वा तदुपदर्शितक्रमेण प्रविश्य कन्यान्तःपुरं दुग्धफेननिभे पर्य्यङ्कतले विश्रब्धप्रसुप्तां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामिनीं राजकन्याम् अपश्यम्।

दृष्ट्वैव कामवशश्चोरयितव्यनिष्पृहः तया एव तावत् चौर्य्यमाणहृदयः किंकर्त्तव्यविमूढः क्षणं स्थित्वा व्यचिन्तयं चेदिमां नाप्नुयां न मृष्यति मां मदनः, तदत्र प्राप्तरूपमिति विविच्य तत्रत्यं फलकमेकमादाय मणिसमुद्गकात् वर्णवर्त्तिकामुद्धृत्य तथा शयानां तस्याश्च चरणलग्नम् आबद्धाञ्जलिं मामालिख्य मार्य्यांञ्चेमाम्।

त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नैव, मा मैवम्॥

ततश्च अङ्गुलीयकविनिमयं कृत्वा कथं कथमपि तस्मात् निर्गत्य सुरङ्गया पुनर्बन्धनागारमेत्य च तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नः तेषु तेषु दिनेषु मित्रत्वेनोपचरितस्य एवं मया हतः कान्तक इति रहस्यं निर्भिद्य लब्धव्यो मोक्ष इत्युपदिश्य शृगालिकया सह निरगाम्। राजपथे च नागरिकपुरुषान् वञ्चयित्वा रागमञ्जरीगृहमेत्य चिरवियोगखिन्नां तामाश्वास्य नीत्वा च तां निशां प्रभाते पुनरुदारकेण सह समागच्छे।

अथ भगवन्तं मरीचिं पुनःप्राप्तप्रभावमुपगम्य तत्सकाशात्

त्वदुगतिमुपलेभे। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्-पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव सुरङ्गापथेन कन्यान्तःपुरं मां पुनरनयत्। समगंसि चाहं शृगालिकामुखविदितवार्त्तानुरक्तया राजदुहित्रा। अत्रान्तरे चण्डवर्मा सिंहवर्मणोऽवधूतदुहितृप्रार्थनः कुपितः चम्पामवारुणत्। अजयच्च सिंहवर्माणं बलेन। अम्बालिकाञ्च बलात् स्वशिबिरं नीत्वा नृपान्ते विवाह इति कौतुकमबध्नाच्च। अहञ्च धनमित्रमवोचं सखे! समापतितमङ्गनाथसहायं राजन्यबलं सुगूढं सम्भूय पौरवृद्धैः तदुपावर्त्तय ततश्च कृत्तशिरसमेव शत्रुं द्रक्ष्यसीति तथाच तेनाभ्युपगते अहमस्य भवनमलक्ष्यशस्त्रः प्रविश्य अम्बालिकापाणिम् अग्नौ साक्षिणि आदित्समानस्य बाहुदण्डमाकृष्य छुरिकया उरसि प्रहृत्य अन्यांश्च कतिपयान् तत्सहायान् निहत्य हतविध्वस्तं तद्गृहमनुविचरन् वेपमानमधुरगात्रीं प्रियामाश्वास्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविशम् अभवञ्च तव नवाम्बुवाहगम्भीरस्वरेण अनुगृहीत इति।

श्रुत्वा स्मित्वा च राजपुत्रः कथं कार्कश्येन कर्णीसुतमपि अतिक्रान्त इत्यभिधाय उपहारवर्माणं प्रति तद्वृत्तान्तवर्णने समादिदेश।

इति द्वितीयोच्छ्वासः।

---

# अथ तृतीयोच्छ्वासः।

——००——

## उपहारवर्मचरितम्।

स प्रणम्य अभ्यधत्त देव! अहमेकदा पर्य्यटन् विदेहेषु कचिन्मठिकायां विश्रमितुमेत्य कामपि वृद्धतापसीमपश्यम्। तान्तु मद्दर्शनेनाश्रुमुखीमालोक्य किमेतदिति मया उक्ता सकरुणमब्रवीत् आयुष्मन्! मिथिलाधिपतिः प्रहारवर्मा नाम मगधराजस्य राजहंसस्य परं मित्रमासीत् तयोश्च महादेव्यौ वसुमती प्रियंवदे परस्परमप्रतिमं सख्यमादधाताम्। कदाचित् प्रथमगर्भाभिनन्दितां प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत्।

तस्मिन्नेव समये मालवेन मगधराजस्य महाजन्ये प्रवृत्ते मगधराजं दुर्दशां गतिमापन्नमवगम्य मैथिलः कथञ्चित् प्राणितः स्वविषयं गच्छन् पथि ज्येष्ठस्य पुत्रैर्विकटवर्मप्रभृतिभिराक्रान्तं राज्यमुपलभ्य स्वस्रीयात् सुह्मपतेर्बलमादित्सुः अटवीपथमवगाहमानः लुब्धकलुण्ठितसर्वस्वोऽभूत्। अहञ्च कनीयसा तत्सुतेन हस्तवर्त्तिना वनचरशरपतनत्रस्ता वनमवगाह्य केनचित् शार्दूलेन आक्रान्ता निपतिता। मत्पाणिभ्रष्टश्च स बालः कस्यापि गोशवस्य क्रोड़मभ्यलीयत। सहसा तस्मिन् व्याघ्रे शवरशरेण निहते स बालकः शवरदारकैरपहृतः। अहञ्च मोहविह्वलः केनचित् पशुपालेन स्वकुटीरं नीत्वा सुस्थीकृता स्वभर्त्तुरन्तिकगमनाय यावत् यते तावत् मद्दुहिता केनापि यूना सह तमुद्देशमागता।

सा रुदती स्वहस्तगतस्य राजपुत्रस्य किरातहस्तगमनम् आत्मनश्च केनापि आरोग्यविधानं स्वस्थायाश्च पुनस्तेन उपयन्तु-

मिष्टाया निकृष्टजातिसंसर्गवैक्लव्यात् प्रत्याख्यानं तदुद्यमेण च अमुना निर्जने वने स्वशिर:कर्त्तनोद्यमं तेन यूना सहसा उपनीतेन तस्य दुरात्मनो हननम् आत्मनश्च उपयमनम् अकथयत्। स च पृष्ट: मिथिलेन्द्रस्यैव कोऽपि सेवक: कारणविलम्बी तन्मार्गानुसारी विदित:। ततस्तेन सह आवां भर्त्तुरन्तिकमुपेत्य पुत्रयोर्वृत्तान्तेन तं राजानं प्रियंवदाञ्च नितरां व्यथयामासिव:। स च राजा दुर्दैवात् ज्येष्ठभ्रातृपुत्रैश्चिरं विग्रह्य बद्ध: देवी च बन्धनं नीता। हतभाग्या अहं जीवितमपारयन्ती हातुं प्रव्रज्यामाश्रयम्। दुहिता तु मम अगत्या विकटवर्ममहिषीं कल्पसुन्दरीमशिश्रियत्। तौ चेत् राजसुतौ निर्बाधमजीविताम् इयता कालेन तव इमां वयोऽवस्थामाप्स्यताम्। तयोश्च सतो-र्दायादा नरेन्द्रस्य न ईदृशीं दशां घटयेयु: इत्युक्त्वा प्रवृद्ध-बाष्पम् अरोदीत्।

तदाकर्ण्य अहमपि वाष्पमुत्सृजन् अभ्यधां मात: ! समाश्वसिहि, यस्ते हस्तात् प्रच्युतो बाल:, स केनापि मुनिना लब्ध: संवर्द्धितश्च वार्त्तेयं महती, किमनया सोऽहम्। मया च असौ विकटवर्मा कथमपि निहन्तुं शक्य:। माम् इहत्य: कश्चिदपि ईदृक्तया नो जानाति, पितरौ अपि न संविदाते, किमुत अन्ये तदेनमर्थमुपायेन साधयिष्यामि इति।

सा तु हृष्टा सरुदितं परिष्वज्य प्रस्नुतस्तनी सगद्गदमगदत् वत्स ! चिरं जीव, अद्य सुप्रसन्नो विधि: अद्यैव प्रहारवर्मणि अधि विटदृशा जाता:। अहो ! महत् भाग्यं देव्या: प्रियंवदाया: इति अभिधाय सहर्षं स्नानभोजनादिना मामुपाचरत्। रात्रौ कटशय्यामधिश्रितो विना उपधिम् अयमर्थो न साध्य: स्त्रियश्चोपधीनां महत् क्षेत्रम्। अतोऽन्त:पुरवृत्तान्त-मस्या अवगम्य तद्द्वारेण किञ्चिदाचरयिष्यामि इति चिन्तयत:

एवं मे सा त्रियामा व्ययासीत् उदगाच्च भगवान् सहस्रदीधितिः।

उत्थाय च मयि अवसितदिनमुखविधौ तां तापसीं मातः! विकटवर्मणः कश्चिदन्तःपुरवृत्तान्तमवगच्छसि ? इति वदति एव काचिदङ्गना प्रत्यदृश्यत। ताम् आलोक्य सहर्षास्रं पुत्रि! पुष्करिके! पश्य भर्तृदारकम् अयमसौ अकृपया मया वने परित्यक्तः पुनरपि एवमधिगत इति वदन्तीं तां मे धात्रीं सा हर्षनिर्भरनिपीड़िता चिरं प्ररुद्य विलप्य सान्त्विता मया राजान्तःपुरवृत्तान्तमाचख्यौ। कुमार! कामरूपेश्वरस्य कलिन्दवर्मणः कन्या कल्पसुन्दरी नाम कलासु रूपे च अप्सरसोऽपि अतिक्रान्ता पतिमभिभूय वर्त्तते, पतिस्तु बह्ववरोधोऽपि तदेकवल्लभ इति।

तदाकर्ण्य अहं तया एव अपसर्पभूतया राजमहिष्या भर्त्तरि द्वेषं क्रमेण कौशलेन सम्पाद्य आत्मनः प्रतिकृतिमभिलिख्य मन्मात्रा तस्यै मत्तकाशिन्यै प्रहितवान्। सा तु चिरमीक्षमाणा तदवलोक्य ईदृशं सौन्दर्यं देवेऽपि कुसुमसायके न सन्निधत्ते केन इदमालिखितमिति समादृतवती दृष्टा सा मम धात्री सस्मितम् अवादीत् "देवि! सदृशमाज्ञापयसि, भगवान् मकरकेतुः एव सुन्दर इति न शक्यते वक्तुं तद् यदि ईदृशः पुमान् स्यात् स किं लप्स्यते" इति। तयोक्तम् "अम्ब! किमुच्यते शरीरं जीवितं हृदयमिति सर्वमेतदमल्पम् अनर्हञ्च ततो न किञ्चित् लप्स्यते, न चेत् अयं विप्रलम्भः तदमुष्य दर्शनानुग्रहेण चक्षुश्चरितार्थं स्यात् तथा कार्य्यम्" इति। अन्यच्चातिगोप्यं कथयामि मम तातस्य राज्ञा प्रहारवर्मणा परं सख्यमासीत् मातुश्च मे मानवत्या देवी प्रियंवदा सखी आसीत् ताभ्यां पुनरजातापत्याभ्यां समयः कृतः,

आवयोः पुत्राय दुहितृमत्या दुहिता देया इति तातस्तु मां जातां प्रनष्टपुत्रा प्रियंवदा इति विकटवर्म्मणे दत्तवान्। अयन्तु निष्ठुरः कामोपचारेषु अविचक्षणः मृषावादी न रोचते मे भर्त्ता। परलोकभयञ्च ऐहिकेन अन्तरितम् अतोऽमुना यूना मामद्य श्वो वा समागमय इति। तदाकर्ण्य सा मदन्तिकमेत्य तत्सर्वं निवेद्य अतःपरं भर्त्तृदारकः प्रमाणमित्युक्त्वा विरराम।

ततोऽहं तन्मुखात् राजमन्दिरसंविभागं सम्यग्ज्ञात्वा तां पुष्करिकां कृतसङ्केतां राजमहिष्याः सन्निधौ संप्रेष्य निशायां शयनगतो व्यचिन्तयं सिद्धप्राय एवायमर्थः, किन्तु परदारपरामर्शात् धर्म्मव्यतिक्रमः स्यात् स च अर्थकामयोर्द्वयोरधिगमे नीतिं न बाधते, प्रत्युत पित्रोः उद्धारसम्पादनेन महान्तं धर्म्ममावहति, एतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं वक्ष्यन्तीति चिन्तापर एव निद्रामभजे, दृष्टश्च स्वप्ने भगवान् भर्गः प्राह "सौम्य उपहारवर्म्मन्! मा अत्र संशयः कार्य्यः, त्वं मदंशः, असौ च मत्तकाशिनी सुरसरित्, अमूं कदाचित् गणपतिः जलक्रीड़ां कुर्व्वन् अवातरत्। सा तु सपत्नीतनयविहितां विलोडनामसहमाना तमशपत्। एहि मर्त्त्यत्वमिति सोऽपि अहेतुकशापप्रदानात् कुपितः तां शशाप यथा इह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भव इति। इत्थं प्रतिशप्ता सा सुदुःखिता मामेत्य सगद्गदमगदत् नाथ! भवच्चरणनिरताहं गजाननेन इत्थं शप्ता, तदाकर्ण्य सकृपेण मया उक्तं प्रिये! न अस्य शापोऽन्यथा भवेत्, परमहं त्वदनुग्रहार्थं द्विधा भूत्वा विकटवर्म्मोपहारवर्म्मरूपाभ्यां मर्त्त्यलोकेऽवतरिष्यामि। त्वं कामरूपेश्वरस्य कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्म्मणा किञ्चित्-

कालं सङ्गता ततस्तस्मिन् स्वमूर्त्तौ एव लयमुपगते उपहार-वर्मणा मत्कनिष्ठेन अंशेन साकं चिरं विविधसुखमनुभविष्यसि, तदयमर्थो भव्यो मा अत्र शङ्का कार्य्या” इति।

अहञ्च तत्क्षणं प्रतिबुद्धः कथञ्चित् तदहर्गमयित्वा समागतायां निशायां सञ्चरत्सु तिमिरेषु नीलनिवसनः खड्गपाणिः मातृनिर्दिष्टान्तःपुरसन्निवेशस्मरणेन सोत्साहं पूर्वसङ्केतितं माधवीलतामण्डपं प्रविश्य कान्तया सह समगंसि। कृतालिङ्गनश्च तां विशाललोचनाम् अनर्गलकलप्रलापिनीं यथाकामम् अरीरमम्। ततश्च मां निर्यान्तमालोक्य सा दीनानना सवाष्पमाचष्ट नाथ! यदि प्रयासि, प्रयातं मे जीवितं गणय, नय मामपि यथा ते रोचते, इति कृताञ्जलिं तामवादिषं प्रिये! कः पुमान् ईदृशीं कामिनीं न कामयते, यदि मयि अनुरागस्ते निश्चलः, तदाचर अविचारं मदुपदिष्टम्। दर्शय राज्ञे मच्चित्रपटम् आचक्ष्व च किमियमाकृतिः सौन्दर्य्यस्य परां कोटिमारूढ़ा न वा इति। वाढ़मिति स नियतं वक्ष्यति। पुनश्च ब्रूहि यदि एवम् अस्ति कापि तापसी नानादेश-भ्रमणेन लब्धवैदग्धरा मन्मातृभूता, तया इदमालेख्यरूपं प्रदर्श्य अहमुक्ता “पुत्रि! अस्ति तादृङ्मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते हुताशने नक्तम् एकाकिनी शतं चन्दनसमिधः शतमगुरुकाष्ठानि, कर्पूरमुष्टीः पट्टवस्त्राणि च हुत्वा भविष्यसि एवमाकृतिः। ततः चालयिष्यसि घण्टां घण्टारवाङ्कतश्च भर्त्ता तुभ्यं सर्वं रहस्यमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत् इयमाकृतिस्त्वमुपसंक्रामेत् त्वन्तु यथापुराकृतिरेव भविष्यसि यदि भवत्यै राज्ञे च एवं रोचेत तदा अविचारमिदमनुष्ठीयतां न अत्र विसंवाद-शङ्का कार्य्या” इति। अतो वपुर्भेदिदं तवाभिमतं सह सुहृद्भि-

मन्त्रिभिः पौरवर्गैश्च संमन्त्र्य तदनुमतेन कर्मणि अस्मिन् अभियुज्यताम् इति ।

स नियतमभ्युपैष्यति । ततश्च त्वं कृतकनर्मस्मिता विकटवर्म्मणं कर्णे एवम् आलपिष्यसि धूर्त्त! त्वमकृतज्ञः, मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीः अभिरमयिष्यसि, न अहमात्मविनाशाय वेतालोत्थापनमाचरेयम् इति श्रुत्वा इदं त्वद्वचः स यद् वदिष्यति तन्मह्यं ज्ञापयिष्यसि, साम्प्रतं मत्पदचिह्नानि च उपवने पुष्करिकया प्रमार्जय इति । सा तथा इति शास्त्रोपदेशमिव मदुक्तमादृत्य अहृष्टतरागेव कथमप्यन्तःपुरमगात् । अहमपि यथापूर्वं निर्गत्य स्वमावासं प्रत्ययासिषम् ।

अथ सा तथैव तमर्थमन्वतिष्ठत् । अतिष्ठच्च स दुर्मतिस्तन्मते । अभ्रमच्च पौरजानपदेषु इयमद्भुतायमाना वार्त्ता । बृहस्पतिप्रतिमबुद्धिभिरपि मन्त्रिभिः अनुमोदितं यदि एवं नान्यदतः परमस्ति किमपि अद्भुतम् अचिन्त्यो मणिमन्त्रौषधीनां प्रभाव इति प्रसृततरेषु लोकवादेषु प्राप्ते पर्वदिवसे प्रगाढ़ायां तिमिरनिपीड़ितायां प्रदोषवेलायाम् अन्तःपुरोद्यानात् उदगमत् महान् धूमसञ्चयः । क्षीराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनां परिमलः पवनानुसारी दिशि दिशि । अथ प्रशान्ते च तस्मिन् धूमोद्गमे गृहोद्यानमहमगमम् आगमच्च सा गजगामिनी । आलिङ्ग्य मां सस्मितमभाषत धूर्त्त! सिद्धं ते समीहितम् अवसितश्च पशुरसौ । अमुष्य उपप्रलोभनाय त्वदादिष्टया दिशा मया उक्तं कितव! न साधयामि सौन्दर्य्यं त्वमेवं सुन्दरो भूत्वा अप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणां मधुकर इव निसर्गचापलात् यत्र क्वचिदासज्जसि मवादृशो जन इति तेन तु मे पादयोर्निपत्य अभिहितं

प्रिये! क्षमस्व मत्कृतानि दुष्कृतानि मनसा अपि न अतःपरं चिन्तयेयम् अपरनारीः। त्वरस्व प्रकृते कर्म्मणि इति। एवमालपन्तीं तां समालिङ्ग्य पुनःपुनश्चुम्बित्वा इहैव कुरुवक-गुल्मगर्भे तिष्ठ यावदहं साधयेयं कार्य्यमिति विसृज्य उपसृत्य च होमप्रदेशं घण्टामचालयम्। अकूजञ्च सा तं जनं क्षता-न्तदूतीव प्राह्वयन्ती, आयासीच्च राजा तं देशम्। अगुरुचन्द-नानि जुह्वतं मां दृष्ट्वा शङ्कापन्नमिव तं सविस्मय विचार्य्य तिष्ठन्तमब्रवं ब्रूहि सत्यं भूयोऽपि भगवन्तं चित्रभानुं साक्षी-कृत्य न चेदनेन रूपेण मत्सपत्नीः अभिमंस्यसि, ततस्त्वयि इदं रूपं सङ्क्रामयिष्यामीति। स तदेव दृव्या इव इयं नापधिः इति सञ्जातप्रत्ययः शपथाय प्रावर्त्तत, ततः स्मित्वा पुनरप्युक्तं कथय कानि ते रहस्यानि, तत्कथनान्ते च त्वत्स्वरूपभ्रंश इति।

सोऽब्रवीत् अस्ति वृद्धो मत्पितुः कनीयान् भ्राता प्रहार-वर्म्मा, तं विषान्नेन व्यापाद्य अजीर्णदोषं ख्यापयिष्यामिति मन्त्रिभिः सह अध्यवसितम् अनुजाय विशालवर्म्मणे दण्डचक्रं पुण्ड्राभियोगाय दित्सितं पौरवृद्धः पाञ्चालिकः परिव्रातश्च सार्थवाहः खलतिनाम्ना यवनात् वज्रमेकं वसुन्धरामूल्यं लघी-यसा मूल्येन लब्धमिति ममैकान्तेऽमन्त्रयेताम्। गृहपतिश्च मम अन्तरङ्गभूतो जनपदमहत्तरः शतहलिः अलौकवादशील-मवलेपवन्तं दुष्टग्राममुख्यमनन्तसीरं जनपदकोपेन घातयेयम् इति दण्डधरानुद्धारकर्म्मणि मत्प्रयोगात् नियोक्तुमभ्युपागमत्। इत्यमिदमचिरं प्रवृत्तं रहस्यम्। इत्याकर्ण्य तमहम् इयत् तवायुः उपपद्यस्व स्वकर्म्मोचितां गतिम् इति क्षुरिकया द्विधा-कृत्य कृत्तमात्रं तस्मिन्नेव समाचिषि अजुहवम् अभूच्चासौ भस्मसात्। अथ स्त्रीस्वभावविह्वलां प्राणवल्लभां समाश्वस्य हस्त-

किसलये गृहीत्वा गत्वा च तद्गृहम् आहूय च तदनुमत्या सर्वाणि अन्तःपुराणि सद्य एव सेवां दत्तवान्। ततो विस्मितान् तान् सर्वान् विसृज्य शय्यागृहे तया कान्तया सह प्रविश्य तामभिरमयन् क्षणमिव तां निशामनैषम्। अध्यगमञ्च तन्मुखात् राजकुलस्य शीलम्।

अथ उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः समागतः तान-वादिषम् आर्य्याः! रूपेणैव परिहृत्तो मम स्वभावः, य एष विषान्नेन हन्तुमिष्टः पिता मे, स मुक्त्वा स्वमेव राज्यं भूयोऽपि ग्राहयितव्यः। पितृवदमुष्मिन् शुश्रूषया एव वर्त्तामहे न हि अस्ति पितृवधात् पातकमिति भ्रातरं विशालवर्माणमाहूय उक्तं वत्स! न सुभिक्षाः साम्प्रतं पुण्ड्राः, ते उपद्रुता राष्ट्रं नः सुभिक्षमभिद्रवेयुः अतो न अद्य यात्रा कार्य्या इति नगरवृद्धौ अवादिषम् अल्पीयसा मूल्येन महार्हं वस्तु न क्रेतव्यम्, अनु-रूपेणैव मूल्येन क्रीयतामिति। शतहलिं च उक्तवान् योऽसौ अनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत तत् त्वयापि न अत्र संरम्भः कार्य्य इति।

तं च सर्वं सर्वमेतदाभिज्ञानिकमुपलभ्य स एवायमिति निश्चिन्वाना विस्मयमाना मां महादेवीञ्च प्रशंसन्तो मन्त्रबलानि च उद्घोषयन्तः बन्धनात् पितरौ मोचयित्वा स्वं राज्यं प्रत्यपा-दयन्। अहञ्च सर्वमिदं तया मे धात्र्या आचेष्टितं पितरौ अवगमय्य प्रहर्षकाष्ठाधिगतयोस्तयोः पादमूलमभजे। अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया। इत्थं सिद्धकामो देवपा-दविरहदुःखदुर्भगान् भोगान् उपभुञ्जानः भूयोऽस्य सिंह-वर्मणः लेख्यात् चण्डवर्मणः चम्पाभियोगमवगमय्य शत्रुवधो मिमरक्षा च उभयमपि करणीयमिति बलवता सैन्यचक्रेण

भ्यसरम्। अभवच्च भूमिस्तत्पादपद्मसाक्षात्कारानन्दराशेः इति।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत् पश्यत पारदारिकमुपधियुक्तमपि गुरुजनबन्धमोक्षहेतुतया दुष्टामित्रबधसाधनतया राज्यलाभमूलतया च पुष्कलौ अर्थधर्मौ असाधयत्। किं हि बुद्धिमद्भिः प्रयुक्तं न अभ्युपैति शोभामिति अर्थपालमुखे दृष्टिं निधाय ब्रवीतु भवान् आत्मीयं चरितमित्यादिदेश।

इति तृतीयोच्छ्वासः।

---

## अथ चतुर्थोच्छ्वासः।

### अर्थपालचरितम्।

सोऽब्रवीत् "देव! अहमपि भवदन्वेषणैककर्मा पर्यटन् कदाचित् काशीपुरीमेत्य मणिकर्णिकायामुपस्पृश्य भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं कुर्वन् कमपि पुरुषमायामवन्तमाबध्यमानपरिकरं रुदितोच्छूनताम्रदृष्टिमपश्यम् अतर्कयञ्च कर्कशोऽयं पुरुषः कार्पण्यमिव वर्षति म्लानतारेण चक्षुषा। आरम्भश्च साहसमनुवदति नूनमसौ प्राणनिस्पृहः किमपि घोरव्यसनमूलं कृच्छ्रं प्रपित्सते इति अपृच्छमेनं भद्र! समारम्भोऽयं साहसमवगमयति न चेद् गोप्यं श्रोतुमिच्छामि। स मां सबहुमानं निर्वर्ण्य को दोषः श्रूयतामिति क्वचित् वीरतले मया सह कथामकार्षीत्।

सौम्य! अहमस्मि पूर्वं कामचारी पूर्णभद्रो नाम। पिता

प्रयत्नसंवर्द्धितोऽपि दैवगत्या चौर्य्यवृत्तिः आसम्। अथ अस्यां काशीपुर्य्यां वैश्यश्रेष्ठस्य कस्यचित् गेहे चोरयित्वा अपहृतवस्तुना अभिग्राहितो बद्धः। बद्धे च मयि मृत्यु-विजयो नाम हिंसाविहारी मत्तगजः पश्यतः कामपालनाम्नः प्रधानामात्यस्य शासनात् मां प्रति महावेगेन समापतत् मया च निर्भयेण निर्भर्त्सितः भीतवत् न्यवर्त्तत। तदवलोक्य मन्त्री मामाहूय अवादीत् भद्र! मृत्युरेव अयं हिंसाविहारी गजेन्द्रः त्वया एवं निराकृतः, तत्प्रीतोऽस्मि ते, विरम अस्मात् अप-कर्म्मणः अद्यप्रभृति आर्य्यवृत्त्या मामनुवर्त्तस्व इति। यथा आज्ञापयसि इति मयोक्तः मित्रमिव मामनुगृह्य जातविश्रम्भेण मया एकदा पृष्टः स्वचरितमाचष्ट।

आसीत् कुसुमपुराधिपतेर्मन्त्री धर्म्मपालो नाम, तस्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु तस्यास्मि वैमात्रेयः कनीयान् भ्राताहम्। शैशवे दुर्वृत्तोऽहं तेनोपदिष्टोऽपि यदृच्छया दिक्षु भ्रमन् अस्यां वाराणस्यां समेत्य अस्याः पतेः चण्डसिंहस्य कन्यां कान्तिमतीं कथञ्चन चकमे सञ्जग्मे च। गूढं विहरता मया सा सञ्जातगर्भा पुत्रमेकमसूत अत्याचोक्ष्म मृतजात इति। परिजनश्च अस्याः तं बालं क्रीड़ाशैलं शबरी च काचित् श्मशानं निनाय। रक्षिक-पुरुषभीतया तया अगत्या रहस्यनिर्भेदे कृते राजाज्ञया अहं श्मशानमुपनीय मातङ्गोद्यतेन खड्गेन प्राजिहीर्षि। दैवबलात् लूनबन्धनोऽहं तमसिम् आच्छिद्य तं मातङ्गम् अन्यांश्च कांश्चित् प्रहृत्य पलायमानो निराश्रयश्च भ्रमन् कयापि दिव्ययोषिता उपस्थापितोऽस्मि। सा मया कृताञ्जलिना का त्वं कथं मामनुगृह्णासि इति सादरमभिहिता अब्रवीत् आर्य्य! अहमस्मि तारावली नाम यक्षकन्या, अहमेकदा

वाराणस्याः प्रेतावासे कमपि रुदन्तं बालकं दृष्ट्वा आदाय स्नेहेन पित्रोः सकाशमनैषम्। अनैषीच्च तातो देवस्यालकेश्वरस्य आस्थानीम्। तेन देवेन अहमाहूय अभिहिता वत्से! बालेऽस्मिन् कीदृशः ते भाव इति। औरस इव अस्मिन् वत्सलता इति मयोक्ते स सत्यमाह वराकीति तन्मूलां महतीं कथामकरोत्। तत्र एतत् मया अवगतं त्वं मम जन्मान्तरीणः पतिः, तस्मिंश्च जन्मान्तरे शिशुरयं मद्गर्भजः, मम च विनयवती नाम या सपत्नी आसीत् तया असौ बालः स्नेहेनावर्द्धत। ततश्च तस्यां कान्तिमत्यवस्थायामद्य स बालः समुद्भूत्। एवं मृत्युमुखपरिभ्रष्टं दैवान्मया उपलब्धं तं तस्यैव देवस्य आदेशात् वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्य्यार्थं समर्प्य गुरुभिरनुज्ञाता साम्प्रतं कृतान्तबलात् कृतान्तमुखपरिभ्रष्टस्य भवतः पादपद्मशुश्रूषार्थमागता अस्मि इति।

श्रुत्वा तां जननान्तरप्रियामसकृदाश्लिष्य सहर्षं तत्प्रभावरचिते महति मन्दिरे अहर्निशं भूमिदुर्लभान् भोगान् भुञ्जानः कदाचित् तामवादिषं प्रिये! प्रत्यपकारेण मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि इति। तया सस्मितया उक्तम् एहि कान्त! कान्तिमतीदर्शनाय इति निशीथेऽहं राज्ञो वासगृहमनैषि। अहन्तु तच्छिरोभागवर्त्तिनीमसियष्टिमादाय तं नृपं प्रबोध्याब्रवम् अहमस्मि तव जामाता त्वदनुमतिमन्तरेण त्वत्कन्याभिमर्षी, तमपराधमनुवृत्त्या प्रमार्ष्टुमागत इति।

सोऽतिभीतो बद्धाञ्जलिरवदत् अहमेव मूढोऽपराधी यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा वधमादिशम्। आस्तां तावत् कान्तिमती, राज्यमिदं जीवि-

तच्च मम अद्यप्रभृति त्वदायत्तमिति। परेद्युश्च प्रकृतिमण्डलमाहूय यथाविधि कन्यां मह्यमदात्। तारावली च कान्तिमत्यै तनयवार्त्तामश्रावयत्। इत्थमहं मन्त्रिपदापदेशं यौवराज्यमनुभवन् सुखं विहरामि।

एवं गते स महाभागः कालेन क्षयरोगेण स्वर्गते श्वशुरे ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीषु अतिप्रसङ्गात् प्रागेव क्षयं गते पञ्चवर्षदेशीयं सिंहघोषाख्यं कुमारमभ्यषेचयत्। अवर्द्धयच्च यथाविधि तं स साधुः। अथ असौ यौवनोन्मत्तः कतिपयैर्दुर्मन्त्रिभिरित्थमग्राह्यत यथा तव अनेन स्वसा प्रसह्य बलात्कृता लम्पटेन, ततश्च प्रसुप्ते राजनि प्रहर्त्तुमुद्यतासिरासीत्। तच्च देवज्येष्ठं विषेण हत्वा बालोऽयमसमर्थ इति लब्धापि प्रकृतिविस्रम्भेण उपेक्षितः। तत् शीघ्रमेवामुमन्तकपुरं नेतुमर्हति देव इति। स एवं दूषितोऽपि यक्षिणीप्रभावात् नामुष्मिन् पापमाचरितुमशकत्।

अथ केनापि कारणेन यक्षिण्या विरहमुपलभ्य निर्भयोऽसौ यथापूर्वं राजकार्य्याणि कुर्वन्तं तं पूर्वसङ्केतितैः पुरुषैरभिग्राह्य अबन्धयत् आदिशच्च तस्य मरणफलं नेत्रोत्पाटनमिति। अतोऽहमेकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान् मुमुक्षुर्बध्नामि परिकरमिति।

मया अपि तत्पितृव्यसनमाकर्ण्य साश्रु अभिहितं सौम्य! किं गोपनेन यक्षकन्यया वसुमतीहस्ते यः समर्पितः पोतः, सोऽहमस्मि, तदत्र किं प्रतिपत्तव्यमिति वदति एव मयि, सहसा आशीविषः प्रत्यदृश्यत, तमहं मन्त्रबलेन संगृह्य पूर्णभद्रमवादिषं भद्र! सिद्धं नः समीहितम् अनेन पितरं नेत्रोत्पाटनार्थमानीतं यदृच्छया पातितेन दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत। ततश्च पूर्णभद्रमुखेन मातरं

प्रबोध्य तया यद् यत् करणीयं, तत्तदुपदिश्य च घोषणास्थाने तिन्तिड़ीवृक्षमारुह्य गूढ़तनुरतिष्ठम्। तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमनेकजनानुयातमानीय मदभ्यास एव स्थापयित्वा मातङ्गः त्रिवारम् अघोषयत्। एष मन्त्री कामपालः भर्त्तारं चण्डसिंहं युवराजं चण्डघोषञ्च निहत्य पुनर्देवेऽपि सिंहघोषे पापमाचरिष्यन् विश्वासात् रहस्यभूमौ अमात्यं शिवनागादिकमाहूय राजवधायोपजप्य स्वामिभक्त्या तद्विवृतगुह्यः राज्यकामुकस्यास्य ब्राह्मणस्यान्धतमःप्रवेशो न्याय्य इति विचारपतिवाक्यादच्युद्धरणार्थं नीयत इति।

श्रुत्वैतद्धहकलकले जनसमूहे पितुरङ्के तमाशीविषं न्यक्षिपम्। अस्तम्भयञ्च क्षणेन विषम्। अपतच्च स भूमौ मृतकल्पः। स च दर्वीकरस्तमपि चण्डालं दष्ट्वा त्रासद्रुतलोकदत्तमार्गः प्राद्रवत्। अथ मे माता प्राक् पूर्णभद्रप्रबोधिता तादृशेऽपि व्यसने नातिविह्वला पद्भ्यामेव आगत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेन दधती राजानं समादिशत् एष मम पतिस्तवापकर्त्ता न वा इति दैवमेव जानाति, न मेऽनया चिन्तयास्ति फलम् अस्य तु गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम् अतोऽनुमन्तुमर्हसि भर्त्रा सह चितामधिरोढुमिति तदाकर्ण्य प्रीतः स राजा समादिशत् क्रियतां कुलोचितमनुष्ठानम् अनुभूयताञ्च मे भगिनीपतिना उत्सवोत्तरः पश्चिमो विधिरिति। अथानीतः पिता मे विविक्तायां भूमौ स्थापितश्च। अथ मदम्बा सहमरणमण्डनमनुष्ठाय रुदती पितुरन्तिकं मे प्राविक्षत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन मया मन्त्रबलेन निर्विषीकृतं पितरमैक्षत। ततश्च हृष्टतमा पितुर्मे पादयोरश्रुमुखी पतन्ती मां मुहुर्मुहुः परिष्वज्य सहर्षमङ्कमारोपयन्ती तस्मिन् क्षणे किमपि अन्यादृशीवाजनिष्ट। पितापि

मे पूर्णभद्रमुखेन सविस्तरमावेदितमद्वृत्तान्तः भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत्। अथाहं पित्रोरकथयम् आज्ञापयतं किमिदानीं करणीयमिति। पिता अब्रवीत् वत्स ! गृहमेतदस्मदीयमतिविशालं सन्ति अत्र बहूनि अक्षय्याणि आयुधानि अलङ्घ्या च गुप्तिः, उपकृताश्च मया अतिबहवः सन्ति सामन्ताः, प्रकृतयश्च बहवो न मे व्यसनमनुमोदन्ते सुभटानाञ्च अनेकसहस्रमस्ति। अतोऽत्रैव स्थित्वा कथमपि दुर्दान्तमेनमुच्छेत्स्याम इति अनुमोदितञ्च मया तातस्य तदभिप्रेतम्।

इत्थमवस्थितेषु अस्मासु राजा विज्ञातोदन्तः अस्मदुच्छेदाय बहून् उपायान् प्रायुङ्क्त ते च अस्माभिरहन्यन्त। एतस्मिन्नवसरे पूर्णभद्रमुखात् राज्ञः शयनस्थानमवगम्य स्वगृहकोणात् सुरङ्गामकार्षम्। गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमपि उद्देशम्। तत्र च मां दृष्ट्वा प्रव्यथितेषु नारीजनेषु काचित् इन्दुकला इव स्वलावण्येन रसातलान्धकारं निह्नुवाना राजलक्ष्मीरिवानेककुनृपपरिहाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिका इवावदातकान्तिः कन्यका चन्दनलता इव मलयमारुतेन मद्दर्शनेन उदकम्पत। काचिच्च तन्मध्यात् स्थविरा पादयोर्मे निपत्य सत्रासम् अब्रवीत् दीयतामभयदानमस्मै अनन्यशरणाय स्त्रीजनाय, किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः, आज्ञापय कोऽसि, किमर्थमागतोऽसीति। मया उक्तं मास्म भवत्यः ! भैषुः, अहमस्मि कामपालात् विप्रमुख्यात् देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम, सत्यर्थे निजगृहात् नृपगृहं प्रविशन् युष्माभिर्दृष्टः, कथयत काः स्थ यूयं कथं वा अत्र निवसथ इति।

सा कृताञ्जलिरभ्यधात् भर्तृदारक! भाग्यवत्यो वयं यास्त्वामद्य एभिरेव चक्षुर्भिरद्राक्ष्म। श्रूयतां तव मातामहेन चण्डसिंहेन चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि। चण्डघोषस्तु युवराजः स्त्रीषु अतिप्रसङ्गात् प्रागेव क्षयमगात् भार्य्यायामाचारवत्यामन्तर्वत्न्याम्। असौ च इमां मणिकर्णिकां नाम कन्यां प्रसूय तत्प्रसववेदनया त्यक्तप्राणा पत्युरन्तिकमगात्। ततश्च देवः चण्डसिंहो मां रहसि समाज्ञापयत् ऋद्धिमतिके! कन्याम् इमां सुलक्षणां वर्द्धयित्वा मालवेन्द्रनन्दनाय दर्पसाराय दित्सामि बिभेमि च कान्तिमतीवृत्तान्तेन कन्यकानां प्रकाशावस्थापनात्। अतोऽत्रैव महति भूमिगृहे प्रभूतपरिवर्हया भवत्या संवर्द्धतामियम्। अस्ति अत्र भोग्यवस्तु वर्षशतेनाप्यक्षय्यमित्यभिधाय निजवासगृहस्याङ्गनभित्तावर्द्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत्। इह वसन्तीनां नो द्वादश समाः समत्ययुः। इयञ्च वत्सा तरुणीभूता, न च अद्यापि स्मरति राजा काममियं पितामहेन दर्पसाराय दित्सिता, परं त्वदम्बया कान्तिमत्या च इयं गर्भस्थैव द्यूतजिता स्वमात्रा तव एव जायात्वेन सङ्कल्पिता, तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणेति। अहन्तु अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो यथाहं प्रतिपत्स्ये इति तामुक्त्वा तेनैव दीपदर्शितबिलपथेन अर्द्धरात्र एव वासगृहं प्रविश्य विस्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम् आकृष्य च तमहिमिव अहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रेण स्त्रैणसन्निधिं ततः स्वभवनञ्च नीत्वा आयसनिगडसन्दानितचरणयुगलम् अवनमितमलिनवदनम् अश्रुबहुलरक्तचक्षुषं पित्रोर्ममादर्शयमकथयञ्च विलकथाम्।

अथ पितरौ तं निकृष्टाशयं सिंहघोषं बन्धने नियम्य

यथाविधि तस्या दारिकायाः मां पाणिमग्राहयेताम्। अराजकञ्च तद्राज्यमस्मदायत्तमेव जातं प्रकृतिकोपभयात् तु मन्त्रिणा मुमुक्षितोऽपि न मुक्त एव सिंहघोषः। तथा स्थिता वयं सहसा सिंहवर्म्मणः देवपादभक्तस्य अमित्राभियोगम् आकर्ण्य अभिसरन्तः देवचरणदर्शनसुखमलभेमहि। इति अभिधाय कृताञ्जलिं तिष्ठन्तं तं देवो राजवाहनः सस्मितं प्राह स्म बहु पराक्रान्तं बुद्धिश्च समुपयोगिनी साम्प्रतं मुक्तबन्धस्ते श्वशुरः पश्यतु माम् इत्यभिधाय प्रीतिपूर्णः त्वमपि स्वचरितमाख्याहीति प्रमतिमन्वयुङ्क्त।

इति चतुर्थोच्छ्वासः।

---

## अथ पञ्चमोच्छ्वासः।

---

## अथ प्रमतिचरितम्।

सोऽब्रवीत् देव! भवदन्वेषणाय भ्रमन्नहं विन्ध्याद्रिपार्श्वरूढस्य कस्यचित्तरोरधः सन्ध्यायां समुपास्य सन्ध्यां भूतले किसलयशय्यामधिशयानः कृताञ्जलिः या अस्मिन् वनस्पतौ वसति देवता सा एव मेऽद्य शरणमस्तु इति उपधाय वामभुजं निद्रामगच्छम्। क्षणेन च अवनिदुर्लभेन स्पर्शेन किमपि सुखायितगात्रः परिस्फुरितदक्षिणभुजः किमेतदिति मन्दं मन्दमुन्मिषन् वामतः सौधोपरि चित्रास्तरणोपेतशय्यायां प्रसुप्तमङ्गनाजनं दक्षिणतश्च परमसुन्दरीं कामपि तरुणीं निद्रितामालोकयम्। अतर्कयच्च क्व गतासौ महाटवी, कुत एतत् अभ्रङ्कषं सौधमागतं कश्चासौ सुराङ्गनाजन इव स्वैरसुप्तः

सुन्दरीजनः का च इयं देवीव अरविन्दवासिनी शयनतल-मधिशेते। अस्ति च अनतिक्रान्तशिष्टमर्य्यादचेतसो मम अस्यामासक्तिः, तदत्र यद्भवतु तद्भवतु भाग्यमत्र परीक्षिष्ये इति तां स्पृष्टास्पृष्टमेव किमपि सञ्जातरागसाध्वसं लघुसुप्तः स्थितोऽस्मि। सापि मत्स्पर्शेन किमपि सुखायमानेन मन्द-मन्दमुन्मिषन्ती त्रासविस्मयहर्षरागशङ्काविलासविभ्रमव्यव-च्छितानि व्रीड़ान्तराणि कानि कानि कामेनावस्थान्तराणि कार्य्यमाणा कथमपि भावविशेषान् निगृह्य सस्पृहेण मधुर-सङ्कुचितत्रिभागेन मन्दमन्दप्रचारितेन चक्षुषा मां निर्वर्ण्य तस्मिन्नेव शयनतले सचकितमशयिष्ट। अहञ्च कथमपि निद्रामभजे। सहसा प्रबुद्धश्चालक्षयं सा एव महाटवी, तदेव तरुतलं स एव पर्णशयनं विभावरी च अत्यगात्। किमिद-मिति विस्मितस्तत्त्वत एतदविदित्वा न त्यक्ष्यामि भूमिशयनं यावदायुरत्रत्यायै देवतायै प्रतिशयिष्यामि इति कृतमति-रतिष्ठम्।

अथ आविर्भूय कापि वराङ्गना विरहिणी इव लक्ष्यमाणा प्रणिपतन्तं मामुत्थाय पुत्रवत् परिष्वज्य स्नेहगद्गदमगादीत् वत्स! श्रुतमस्त्येतदायुष्मतः मगधराजमहिषीमुखात् यथा बालमर्थपालं मम हस्ते निक्षिप्य मणिभद्रस्य यक्षस्य कन्या तारावली अन्तर्हितेति, साहमस्मि, धर्मपालसूनोः काम-पालस्य गृहिणी, कथमपि भर्त्तृपादमूलात् निष्कारणकलु-षिता प्रोष्य जातानुशया स्वप्ने केनापि रक्षसा शप्तास्मि। चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखायेति। इति ब्रुवता एवाहमाविष्टा प्राबुध्ये। गतश्च तद्दिवसं वर्षसहस्र-दीर्घम्। अतीतायान्तु यामिन्यां श्रावस्त्यां देवदेवस्य उत्सव-समाजमवलोक्य पतिपादमूलं गमिष्यामि इति प्रस्थितायामिव

मयि त्वमत्रागत्य प्रतिपन्नोऽसि शरणमिहत्यां देवतामिति प्रसुप्तोऽसि तदा तु न तत्त्वतः परिच्छिन्नो भवान् परं शरणागतमस्यां महाटव्यां परित्यज्य गन्तुमयुक्तमिति त्वां राज्ञः श्रावस्तीश्वरस्य धर्मवर्द्धनस्य प्रासादे विश्रब्धप्रसुप्तायास्तद्दुहितुर्नवमालिकायाः पार्श्वे शाययित्वा तमुद्देशमगमम्। तत्र च गत्वा उत्सवमनुभूय भगवतीं गौरीमभिवाद्य सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्त्य त्वां यथावदभ्यजानं कथं मत्सुत एवायं वत्सस्यार्थपालस्य सखा प्रमतिरिति, दृश्यते च अयमस्यामासन्नभावः कन्या चैनं कामयते युवानम् उभौ चेमौ लज्जया साध्वसेन च न किञ्चित् विवृण्वाते। गन्तव्यञ्च मया, साम्प्रतं नयामि तावत् यथास्थानं कुमारम्। परतश्च कथमपि उपायैरर्थमिमं साधयिष्यतीति भवन्तम् एतदेव पत्रशयनमनैषं साम्प्रतं गच्छामि भर्तृपादमूलमिति प्राञ्जलिं मामभिधाय प्रायात्।

अहञ्च कामवशः श्रावस्तीं गच्छन् पथि ताम्रचूड़युद्धनैपुण्यप्रदर्शनेन कमपि वृद्धविटं मित्रत्वेनाभिगृह्य तेनातितरां समादृतः स्मर्त्तव्योऽस्मि सत्यर्थे इति तेन विसर्जितः श्रावस्त्यामध्वश्रान्तो वाह्योद्यानलतामण्डपे शयितोऽस्मि। हंसरवप्रबोधितश्चोत्थाय मदन्तिकमायान्तीं कामपि तरुणीमपश्यम्। सा तु हस्तवर्त्तिनि चित्रपटे लिखितं कमपि पुरुषं माञ्च पर्य्यायेणावलोकयन्ती सस्मितं मामवादीत् सौम्य! देशातिथिरसि, दृश्यन्ते च ते अध्वश्रान्तानि इव गात्राणि, तदद्य मद्गृहे आगत्य अतिथिसत्कारोऽनुभूयतामिति। अहञ्च तथेति तद्गृहगतो राजार्हेण स्नानभोजनादिना परिचरितः सुखं निषण्णस्तया रहसि परिपृष्टः महाभाग! किञ्चिदद्भुतमुपलब्धं भवता कुतोऽपीति। अहन्तु लब्धावसरः भद्रे! देहि

चित्रपटमित्युक्तया तया दत्ते चित्रपटे चित्रितयुवकस्य पार्श्वे तामपि तथैव व्याजसुप्तां वल्लभामभिलिख्य काचिदेवंरूपा युवतिरीदृशस्य पुंसः पार्श्वे अरण्यान्यां शयानेन मयोपलब्धा किलैष स्वप्न इत्यालपम्। हृष्टतया तया सविस्तरं पृष्टः सर्वं वृत्तान्तमकथयम्। सा तु सख्या मन्निमित्तानि दशान्तराणि अवर्णयत्। अहन्तु तदाकर्ण्य यदि तव सख्या मय्यनुग्रहः, तदा कानिचित् दिनानि गमय, कमपि उपायं शीघ्रमाचरिष्यामीति तां विसर्ज्य तेन मित्रेण वृद्धविटेन समगंसि। तेनापि पूर्ववत् समाहूतः किमर्थमचिरात् प्रत्यागत इति पृष्टस्तमवादिषं मित्र! श्रावस्तीश्वरस्य दुहिता प्रत्यादेश इव श्रियः नवमालिका नाम मया कथमपि दृष्टा काममाराचपङ्क्तिमिव कटाक्षपङ्क्तिं मां प्रति व्यकिरत्। तच्छल्योद्धरणक्षमश्च त्वदृते नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि तदत्र कमप्युपायं कर्त्तुं, प्रसीद। मां स्त्रीवेशधारिणीं निजकन्यां कृत्वा त्वं धर्मासनगतं धर्मवर्द्धनं समेत्य वक्ष्यसि, ममेयमेकैव कन्या, जातमात्रायामस्यां जननी अस्याः संस्थिता, कथमप्येनामवर्द्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जयितुमवन्तीं गतोऽस्मद्वैवाहिकतनयः। तस्मै दित्सिता चेयं तरुणीभूता, स च विलम्बितः, तत्तमानीय पाणिमस्या ग्राहयित्वा सन्न्यसिष्ये। दुरभिरक्षतया च दुहितृणां विशेषतो मुक्तशैशवानाममातृकाणां इह देवं पितृमातृस्थानीयमागतोऽस्मि। सैषा भवद्भुजतरुच्छायायामखण्डचारित्रा तावदास्तां यावदस्याः पाणिग्राहकमानयेयमिति। स एवमुक्तो नियतमङ्गीकरिष्यति, वासयिष्यति च स्वदुहितृसन्निधौ माम्। ततश्चाहं कियन्तं कालं तया रहसि विहृत्य पुनः कथमपि त्वत्सकाशमागमिष्यामि। ततश्च नृपात्मजां मामितस्ततो-

ऽन्विष्य अनासादयन्तीं तया विना न भोक्ष्ये इति रुदतीमालोक्य परिजनेषु व्याकुलेषु महति कोलाहले किं कर्त्तव्यतामूढ़े च राजनि त्वं मां जामातरं कृत्वा राजसभां गत्वा वक्ष्यसि देव! स एष मे जामाता समागतः, अधीती चतुर्षु आम्नायेषु विविधविद्याविचक्षणः चतुःषष्टिकलानिपुणः गजतुरगरथतन्त्रवित् धनुर्वेदविशारदः महागुणशाली, तदर्थं दुहितरं समर्प्य अन्त्यमाश्रममाश्रयेयमिति। स राजा इदमाकर्ण्य विवर्णवदनः सामात्यः त्वामनुनेतुमतिमात्रं यत्नं करिष्यति। त्वन्तु तेषु अदत्तकर्णश्चिरं रुदित्वा राजमन्दिरद्वारे चिताधिरोहणाय उपक्रमिष्यसे, तदैव स त्वत्पादयोर्निपत्य यथाभिलषितैरर्थैः त्वां परितोष्य दुहितरं मह्यं दत्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति सोऽयमुपायोऽनुष्ठीयतामिति।

सोऽपि विटाग्रणीः असकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकञ्च अन्वतिष्ठत्। आसीच्च मम इष्टसिद्धिः। अन्वभवञ्च मधुकर इव नवमालिकामार्द्रसुमनसम्। ततश्च अस्य राज्ञः सिंहवर्म्मणः साहाय्यदानं सुहृत्सङ्केतभूमिगमनञ्चापेक्ष्य सर्वबलसमूहेन चम्पामभिगतो दैवात् देवदर्शनसुखमनुभवामि इति।

श्रुत्वैतत् देवो राजवाहनः सस्मितं विलासप्रायमूर्जितं मृदुप्रायं चेष्टितम् इष्ट एष मार्गः प्रज्ञावतामिति प्रमतिमभिनन्दन् मित्रगुप्तं प्रति वक्तुमादिदेश।

इति पञ्चमोच्छ्वासः।

# अथ षष्ठोच्छ्वासः।

———oo———

## अथ मित्रगुप्तचरितम्।

सोऽब्रवीत् देव! सोऽहं भवदन्वेषणपरः कदाचित् दामलिप्ताख्यस्य नगरस्य बहिरुद्याने महति उत्सवे वर्त्तमाने कमपि विजने वीणया आत्मानं विनोदयन्तं कोशदासनामानं युवानमपश्यम्। अपृच्छञ्च भद्र! को नामायमुत्सवः किमर्थं वा समारब्धः, कथं वा भवान् उत्सवमनादृत्य एकान्ते विषस्ण इव तिष्ठति इति। सोऽभ्यधात् सौम्य! सुह्मपतिस्तुङ्गधन्वा नाम अनपत्यः अमुष्मिन् आयतने स्थितां विन्ध्यवासिनीम् आराधयन् अपत्यद्वयं प्रार्थयामास, अनया किल स्वप्ने समादिष्टं उत्पत्स्यते तव एकः पुत्रः, कन्या च एका, स तु तस्याः पाणिग्राहकमनुजीविष्यति, सा तु सप्तमाद् वर्षादारभ्य आपरिणयं प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्त्तृलाभाय मामाराधयतु, यच्चाभिलषेत् सा अमुष्मै देया, स च उत्सवः कन्दुकोत्सवनाम अस्तु इति। ततोऽल्पेनैव कालेन राजमहिषी मेदिनी नाम एकं पुत्रमसूत कन्याञ्चैकाम्। सा अद्य कन्दुकवती नाम अद्य कन्दुकनृत्येन देवीम् आराधयिष्यति तन्निमित्तोऽयमुत्सवः, तस्यास्तु सखी चन्द्रसेना नाम मम प्रिया आसीत् सा साम्प्रतं राजपुत्रेण भीमधन्वना बलवदाक्रान्ता। तदहमुत्कण्ठितो मन्मथशरविद्धचेताः कलेन वीणारवेण आत्मानं किञ्चिदाश्वासयन् विविक्तमध्यासे इति। अस्मिन्नेव क्षणे काचिदङ्गना तमुद्देशमागमत्। दृष्ट्वैव स ताम् उत्फुल्लदृष्टिरभ्यधात् सा इयं मे प्राणसमा, यद्विरहो दहन इव दहति

माम्। एनामपहरति राजसूनुः, न च शक्ष्यामि तस्य किमपि प्रतिविधातुम्। अतोऽद्य अनया आत्मानं सुदृष्टं कारयित्वा परित्यक्ष्यामि निरुपायान् प्राणान् इति। सा तु रुदती कथमपि प्रियमाश्वास्य अब्रवीत् नाथ! नय मामभीप्सितं देशम्। सोऽवदत् मां भद्र! भवद्दृष्टेषु राष्ट्रेषु कतमत् सुरम्यं सुसमृद्धञ्च। तमहमीषद् विहस्याब्रवं भद्र! विस्तीर्णेयमर्णवनेमिः, न पर्य्यन्तोऽस्ति, स्थाने स्थाने रम्याणां जनपदानाम् न चेदिह युवयोः सुखनिवासोपायं कर्त्तुं शक्नुयां ततोऽहमेव भवेयमध्वदर्शी। तावतैव किमपि नूपुरक्वणितमाविरभूत्। ततश्च असौ जातसम्भ्रमा प्राप्तैव भर्त्तृदारिका, अनिमिषदर्शना च इयमस्मिन् कन्दुकोत्सवे, सफलमस्तु युष्मच्चक्षुः आगच्छतं द्रष्टुम् अहमस्याः पार्श्ववर्त्तिनी भवेयमित्ययासीत्। तामन्वयाव च आवाम्। अहन्तु तां कन्दुकेन क्रीडन्तीं साक्षात् लक्ष्मीमिव मनोभुवः समवलोक्य नितान्तविह्वलतामयासिषम्। सापि मामवलोक्य किमपि अवस्थान्तरमापद्यमाना कथञ्चित् कन्दुकेन यथायथं विहृत्य चन्द्रसेनादिभिः सखीभिः सह, भगवतीं विन्ध्यवासिनीं प्रणिपत्य मनसा मे सानुरागेणेव परिजनेन अनुगम्यमाना कुवलयशरमिव कुसुमशरस्य मयि अपाङ्गं विक्षिपन्ती सापदेशमसकृदावर्त्तमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेषितं प्रतिनिवृत्तं न वा इत्यालोकयन्ती कुमारीपुरमगात्।

अहञ्च कामवशः कोशदासेन स्वं गेहं नीत्वा स्नानभोजनादिकं कारितोऽस्मि, सायञ्च चन्द्रसेना समुपेत्य रहसि मां प्रणम्य कोशदासेन सानन्दं परिष्वक्ता समुपविश्य अभाषत नाथ! मा व्यथिष्ठाः, सिद्धं नः समीहितम् अद्य खलु कन्दुकोत्सवे

युवानमेनमवहसितमनोभवाकारमभिलषन्ती रोषादिव हर-द्विषा अतिमात्रमायास्यते राजपुत्री। सोऽयमर्थो मया राज-महिष्यै, तया च राज्ञे निवेदयिष्यते। विदितार्थस्तु नृपः स्वां दुहितरमस्मै प्रदास्यति, ततश्च राजपुत्रेण अस्य महा-भागस्य अनुजीविना भाव्यम् एष देवतादिष्टो विधिः। एतदा-यत्ते च राज्ये नालमेव भीमधन्वा मामेवं रोद्धुम्। तत् सहतां त्रिचतुराणि दिनानि इत्यभिधाय प्रियमालिङ्ग्य प्रायासीत्। तदाकर्ण्य मम कोशदासस्य च बहुविकल्पयतोः कथञ्चिदक्षीयत क्षपा।

अन्येद्युर्भीमधन्वा कथञ्चिद् विदितमद्वृत्तान्तः केनचित् अपदेशेन मां स्वावासं नीत्वा राजवदुपचरितं पर्य्यङ्कोपरि-सुखसुप्तं पूर्वसङ्केतितैः पुरुषैर्बन्धयित्वा आयसनिगडेन सागरा-म्भसि न्यक्षेपयत्। अहन्तु निरवलम्बनः भुजाभ्यामितस्ततः प्लवमानः किमपि दैवदत्तं काष्ठमेकमुपश्लिष्य तावदप्लोषि यावदपासरद् वासरः शर्वरी च। प्रातश्चैकमदृश्यत वहि-त्रम्। तत्र स्थिता यवना मामुद्धृत्य रामेषुनाम्ने नाविक-नायकाय समर्पयन्। क्षणे चास्मिन् नैकनौपरिवृतं कमपि नौदस्युमभिधावन्तं दृष्ट्वा भयमापुर्यवनाः। प्रतिनावश्चातिवे-गेन श्वान इव वराहमस्मत्पोतं पर्य्यरुन्धन्। प्रावर्त्तत सम्प्र-हारः, पराजिता यवनाः। तानहमगतीन् समाश्वास्यावा-दिषम् अपनयत मे निगडबन्धनम् अवसादयामि वः सप-त्नान् इति। श्लथितबन्धनश्च तैरहं तान् सर्वान् प्रतिभटान् भल्लवर्षिणा धनुषा लवलवीकृताङ्गानकार्षम्। अभिपत्य च हतविध्वस्तं तत्पोतम् अमुत्र स्थितं नाविकनायकं जीवग्रा-हमग्रहीषम्। असौ च स एव भीमधन्वा। तस्याहं जात-व्रीडमभाषे तात! दृष्टानि कृतान्तविलसितानि? ते तु

सांयात्रिका मदीयेनैव निगडेन तमतिगाढं बद्धा हर्षरव-मकुर्वन् मां च अपूजयन्। दुर्वारा तु सा नौरननुकूलवातनुन्ना कमपि द्वीपमाश्लिष्टवती तत्रासीन्महाशैलः, अहन्तु तस्य रम्यतामवलोकयितुमवतीर्णः इतस्ततो विचरन् परमकमनीयमेकं सरः समध्यगाम्। स्नातश्च तत्र कांश्चिदमृतस्वादून् विसभङ्गानास्वादयन् तीरवर्त्तिना केनापि भीमरूपेण ब्रह्म-राक्षसेन अभिपत्य कोऽसि कुतस्त्यो वा इति निर्भर्त्सयताऽभिहितोऽहं निर्भयः समभ्यधां सौम्य! अहमस्मि द्विजन्मा शत्रुहस्तादर्णवम् अर्णवाद् यवननावं यवननावश्चिन्नमिनं पर्वतं प्राप्तो यदृच्छया अस्मिन् सरसि विश्रमामीति। सोऽब्रूत न चेद् ब्रवीषि, प्रश्नानश्नामि त्वामिति। मया उक्तं पृच्छ तावत्। अथावयोरेकया आर्य्यया आसीत् संलापः।

किं क्रूरं? स्त्रीहृदयं, किं गृहिणः? प्रियहिताय दारगुणाः।
कः कामः? सङ्कल्पः, किं दुष्करसाधनं? प्रज्ञा॥

तत्र धूमिनी गोमिनी निम्बवती नितम्बवत्यः प्रमाणमित्युक्ते मया सोऽब्रूत कथय कीदृश्यस्ता इति ततो मया उक्तम्। त्रिगर्त्ताख्ये जनपदे महति दुर्भिक्षे वर्त्तमाने त्रयो भ्रातरः धनकधान्यकधन्यकाख्याः क्रमेण सर्वाणि धनानि अपत्यानि ज्येष्ठमध्यमभार्य्ये अपि भक्षयित्वा कनिष्ठभार्य्या धूमिनी श्वो भक्षणीया इति समकल्पयन्। कनिष्ठस्तु प्रियां स्वामत्तुमक्षमस्तस्यामेव यामिन्यां पलाय्य मार्गक्लान्तां कान्तां स्वमांसासृगपनीतक्षुत्पिपासामुद्वहन् वनं प्रविष्टः कमपि विकलेन्द्रियमवनौ लुठन्तमद्राक्षीत्। जातदयश्च तमपि स्कन्धेनोद्वहन् कन्दमूलमृगबहुले वनोद्देशे यत्नरचितपर्णशालो वसन् तमपि विकलमिङ्गुदीतैलादिभिः विरोपितव्रणमामिषादिना स्वनिर्विशेषमपुषत्। एकदा मृगयार्थं

गते पत्यौ सा धूमिनी अनिच्छतापि तेन विकलेन बलात् कारमरीरमत्। न्यक्षिपच्च पतिमागतं जलार्थिनं कूपे। अथ तं विकलं स्कन्धे गृहीत्वा देशान्तरं गता पतिव्रता अस्मि इति तत्तद्देशीयजनेभ्यः प्रशंसाः पूजाश्च लेभे। अथ कथञ्चित् कूपात् कैश्चित् कृपालुभिरुद्धृतम् अन्तिके चरन्तं पतिं धन्यकमालोक्य सा पापा येन मे पतिर्विकलीकृतः स दुरात्मा अयमिति तस्य साधोश्चित्रवधम् अज्ञेन राज्ञा समादेशयाञ्चकार। स तु वराकः सशेषत्वादायुषः यदि असौ विकलः ममापराधं वदेत् तदा मे युक्तो दण्ड इत्यदीनमाचष्ट। तथा कृते स विकलः पर्य्यश्रुः पादपतितस्तस्य साधोस्तत्सुकृतमसत्याश्च तस्यास्तथाभूतं दुश्चरितमाचचक्षे। ततः कुपितो राजा तां पापां विरूपितमुखीं कृत्वा धन्यकं प्रसादयामास। तद् ब्रवीमि क्रूरं स्त्रीहृदयमिति।

अस्ति द्रविड़देशेषु काञ्ची नाम नगरी। तस्यां शक्तिकुमारो नाम कश्चिन्महाधनो वणिक्सुतो गुणवतीं भार्य्यां परिणेतुमितस्ततो ज्योतिषिकच्छद्मना परिभ्रमन् कामपि कन्यकां परीक्ष्य सुलक्षणा इति निश्चित्य तण्डुलप्रस्थमेकं तस्यै दत्त्वाब्रवीत् भद्रे! शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुमिति। सा तु सलज्जस्मितं वृद्धदासीहस्तेन तं शालिप्रस्थमादाय तं वणिक्पुत्रम् उपावेश्य विविधकौशलेन सुचारु अन्नं पक्त्वा यथोचितं स्नानाहारादिप्रदानेन पर्य्यतोषयत्। परितुष्टश्च स तां विधिवदुपयम्य गृहमनैषीत्। नीत्वा एतदनपेक्षः कामपि गणिकामवरोधमकरोत्। तामपि असौ प्रियसखीमिव उपाचरत्। पतिञ्च दैवतमिव अनलसा पर्य्यचरत् अन्वतिष्ठच्च गृहकार्य्याणि यथायथम्। अकरोच्च परिजनं दाक्षिण्येन स्ववशम्। ततश्च

तद्गुणवशीकृतो भर्त्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितः त्रिवर्गं निर्विवेश। तद् ब्रवीमि किं गृहिणः प्रियहिताय दारगुणा इति।

अस्ति सौराष्ट्रेषु वलभी नाम नगरी। तस्यां गृहगुप्तनाम्नः महाविभवशालिनः कस्यचिन्नाविकपतेः कन्यां रत्नवतीं नाम मधुमतीनिवासी बलभद्रो नाम कश्चित् सार्थवाहसुतः परिणिनाय। सा तु बालभावसुलभलज्जा पत्युरभिलषितसाधनपराङ्मुखी भर्त्तृद्वेष्यतामयासीत्। तदारभ्य भर्त्ता तां कथमपि द्रष्टुं न इयेष। ततश्च सर्वे तां दुर्भगां नेयं रत्नवती निम्बवतीति समाख्याय आजुहुवुः।

गते च कस्मिंश्चित् काले सा तु नितरां तप्यमाना गत्यन्तरमपश्यन्ती कामपि प्रव्राजिकां शरणमापन्ना रुदती सकरुणं प्राह मातः! किञ्चिदस्मि वक्तुकामा, मत्तो दुर्भगा कापि नास्ति भूतले। दौर्भाग्यं हि जीवन्मरणमङ्गनानां विशेषतः कुलवधूनां मातृप्रमुखो बन्धुवर्गोऽपि मां सावज्ञं पश्यति, तद् यथाहं पत्युरनुग्राह्या भवेयं तथा उपायः क्रियतां भवत्या, नोचेत् त्यजामि निष्प्रयोजनान् प्राणानिति सा तु सकरुणा तामुवाच वत्से! मा साहसम् अवलम्बस्व यदि कश्चिदुपायस्ते मनसि वर्त्तते तद् ब्रूहि, अहं तदनुसारेण यते, बुद्धिमती असीति। अथासौ किञ्चिद् ध्यात्वा अब्रवीत् भगवति! अस्त्यस्मत्प्रतिवेशिनः कस्यचित् धनिनो कनकवती नाम कन्या मत्समानरूपावयवा मम प्रियसखी, तया सह तदीयहर्म्यतले ततोऽपि द्विगुणमण्डिता विहरिष्यामि, त्वया तु तस्मात्प्रार्थनं सकरुणमभिधाय पतिरेतद्देशं कथञ्चन आनेयः, आनीतश्च तं प्रति अहं तथा अभिलाषं दर्शयिष्यामि यथा असौ कनकवतीमिव

मां मन्यमानो मदासक्तिञ्च जानन् गृहं प्रतियास्यति, ततस्त्वया यथासौ मां कनकवतीमेव विदित्वा देशान्तरं नेष्यति तथा अभ्युपायः करणीय इति ।

सा तु धूर्त्ता तथैव सर्वं सम्पादितवती । अथासौ बलभद्रः तां सरत्नाभरणपरिच्छदामादाय निशि पलाय्य प्रावसत् । सा तु प्रव्राजिका वार्त्तामघोषयत् मन्देन मया निर्निमित्तमुपेक्षिता रत्नवती श्वशुरौ च परिभूतौ तदत्रैव पुनः संसर्गं जिह्रेमीति पूर्वेद्युर्मामकथयत् नूनमसौ रत्नवती तेन नीतेति । ततोऽसौ बलभद्रः खेटकपुरं गत्वा तत्र वाणिज्यकौशलेन बहूनि धनान्युपार्ज्य प्राधान्यमगात् । क्रमेण कयाचिद्दास्या कारणेन केनापि रोषितया निर्भिन्नं रहस्यम् अयं बलभद्रः निधिपतिदत्तस्य कन्यां कनकवतीमपहृत्य अत्रैव वसतीति ततो राज्ञा तस्य सर्वस्वहरणे दण्डे आज्ञप्ते भीतं बलभद्रम् एकान्ते प्राह रत्नवती । नाथ ! न भेतव्यं ब्रूहि नेयं कनकवती परं मया न्यायोढ़ा रत्नवती, गृहगुप्तदुहिता न चेत् प्रतीथ प्रणिधिं प्रहिणुत अस्या बन्धुपार्श्वमिति । अथ तद्बन्धुवर्गः समागतस्तां दुहितरं जामात्रा सह हृष्टः स्वपुरं प्रत्यनैषीत् । ततो रत्नवतीं कनकवतीं भावयतस्तस्य सा अतिप्रिया आसीत् तद्ब्रवीमि कामो नाम सङ्कल्प इति ।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमपृच्छत् । अहमब्रवम् । अस्ति मथुरा नाम पुरी, तस्यां कोऽपि कलहकण्टको नाम वणिक्पुत्रः कलासु गणिकासु चातिसक्तः प्रतिवसति स्म । एकदा असौ एकं चित्रपटं कस्यापि हस्ते ददर्श । तत्र काचिदालिखिता युवतिरस्य कामार्त्तं मनश्चकार । तर्कयामास च विडम्बमिवैतद् दृश्यते यतः कुलजादुर्लभं वपुराभिजात्यशंसिनी

च नम्रता, पाण्डुरा मुखच्छविः न चैषा प्रोषितभर्तृका, प्रवासचिह्नस्य वेश्यादेरदर्शनात्। तदियं वृद्धस्य कस्यचित् नातिपुंस्त्वस्य यथार्हसम्भोगालाभपीड़िता गृहिणी भवितुमर्हतीति। चित्रपटधारी प्राह सत्यमुपलक्षितम् एषा अवन्तिपुर्य्यामनन्तकीर्त्तिनाम्नः सार्थवाहस्य वनिता यथार्थनाम्नी नितम्बवती नाम सौन्दर्य्यविस्मितेन मया आलिखिता इति।

स तु कलहकण्टको नाम तदाकर्ण्य एव जगामोज्जयिनीम्। तत्र दैवज्ञो नाम भूत्वा भिक्षामिषेण तद्गृहं गत्वा तामवलोक्य नितरां मन्मथवशंवदः पौरमुख्येभ्यः तत्रत्यश्मशानरक्षामयाचत अलभत च। क्रमेण च कामपि श्रमणिकां वशीकृत्य दूतिकां कृत्वा नितम्बवतीसकाशं शिक्षयित्वा प्राहिणोत्। सा तु धूर्त्ता पुत्रवती भव इति तामाशिषा संवर्द्ध्य विविधालापमकरोत्। ततश्चान्येद्युः पुनरागत्य प्राब्रवीत् वत्से! भर्त्ता तव पाण्डुरोगग्रस्तः श्रूयते भोगे चासमर्थः, मम चाशीर्वादोऽवितथः, न च शक्यं तस्य विघ्नमप्रतिकृत्य अपत्यमस्माल्लब्धुम्। तत् प्रसीद निशि मदुपनीतस्य कस्यचिन्मन्त्रवादिनः करे चरणमर्पयित्वा तदभिमन्त्रितेन चरणेन प्रणयकुपिता नाम भूत्वा भर्त्तारमुरसि प्रहर्त्तुमर्हसि, ततोऽसौ भर्त्ता नीरोगोऽपत्योत्पादनक्षमो भविता मात्र शङ्का कार्य्या इति। सा तु सरला तद्वचसि विश्वस्ता निशायां तया उपनीतस्य तस्य कलहकण्टकस्य हस्ते यावत् स्वचरणं न्यस्यति, तावदेव स धूर्त्तस्तदूरुमूले छुरिकया किमपि आलिख्य नूपुरमेकं चरणादाक्षिप्य द्रुतमपासरत्।

सा तु सत्रासा स्वमेव दुर्नयं गर्हमाणा तद्व्रणं पटबन्धनेनाच्छाद्य आमयापदेशेन त्रिचतुराणि दिनानि शयनपरा

अतिष्ठत्। स तु धूर्त्तः विक्रेष्य इति तेन नूपुरेण तम-नन्तकीर्त्तिमाससाद। स दृष्ट्वैव मद्गृहिण्या एष नूपुरः कथं त्वया उपलब्ध इति तमपृच्छत्। स तु निर्बन्धपृच्छयापि यदा न किञ्चित् ब्रवीति तदासौ वणिक् स्वनूपुरयुगलं प्रेषय इति गृहिणीं सन्दिदेश। सा तु सलज्जं सत्रासञ्च अद्य रात्रौ क्वापि स्खलितः अन्विष्टोऽपि नाधिगत एकः, अयं पुन-रपर इति द्वितीयं प्राहिणोत्। अथ समवेतेषु वणिक्वर्गेषु स धूर्त्तः पुनः पुनरनुयुक्तः सविनयमवादीत् विदितमेव भवतां यथाहं श्मशानरक्षणे नियुक्तः तदुपजीवी तिष्ठामि, धूर्त्ताश्च कदाचिन्मद्दर्शनभीरवः निशि दहेयुरपि शवानिति निशास्वपि श्मशानमधिशये। पूर्वद्युर्निशि कामपि दग्धादग्धं शवमा-कर्षन्तीं चितायाः नारीमालोकयम्। अर्थलोभात् साहस-मवलम्ब्य सा मया गृहीत्वा शस्त्रिकया चोरुमूले किञ्चिदा-लिख्य नूपुरमेकं पदादाक्षिप्य च मुक्ता पलायिष्ट। एष ताव-दस्यागमः परं भवन्तः प्रमाणमिति।

ततो विमर्शेण तस्याः शाकिनीत्वं पौरैर्निश्चितम्। भर्त्रा च सा परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य मर्त्तुकामा तेन धूर्त्तेन नक्तं पादयोर्निपत्य अनुनीता अगत्या तत्प्राणवल्लभा आसीत्। तदुक्तं दुष्करसाधनं प्रज्ञा इति।

एतदाकर्ण्य ब्रह्मराक्षसो मामपूजयत्। तस्मिन्नेव क्षणे सहसा अम्बरतलात् मुक्ताफलस्थूलाः सलिलविन्दवोऽपतन्। अहं तु किमिदमिति उच्चक्षुरालोकयं कमपि राक्षसं काम-प्यङ्गनामाकर्षन्तम्। कथमयमकामामनाचारो हरति इति गगनगमनमन्दशक्तौ अशस्त्रे च मयि तप्यमाने स तु ब्रह्मराक्षसः तिष्ठ पाप! क्वापहरसीति, भर्त्सयन् उत्पत्य तेन राक्षसेन संप्रायुध्यत। तान्तु रोषादनपेक्षापविद्धामन्त-

रीक्षादापतन्तीमहमुन्मुखः प्रसारितोभयकरः अग्रहीषम्। गृहीत्वा च वेपमानां सम्मिलिताक्षीं मदङ्गस्पर्शेन उद्भिन्नरोमाञ्चां तामनवतारयन्नेव निर्वर्ण्य मत्प्राणवल्लभां राजकन्यां कन्दुकवतीमेवालक्षयम्। तावत्तावपि राक्षसब्रह्मराक्षसौ परस्परं सम्प्रहारेणाक्षपयेताम्। अहन्तु तां पुलिने समवरोप्य समाश्वास्य अपृच्छं किमिदमिति सा तु तिर्य्यङ्मामभिवीक्ष्य सकरुणमरोदीत् अब्रवीच्च नाथ! त्वद्दर्शनादुपोढ़रागा अहं चन्द्रसेनया त्वत्कथाभिरेव समाश्वासिता अस्मि। अत्रान्तरे पापेन मद्भ्राता त्वां समुद्रे मज्जितं श्रुत्वा सखीजनं परिजनञ्च वञ्चयित्वा जीवितं त्यक्तुकामा एकाकिनी क्रीड़ावनमुपागमं तत्र मामसौ पापः निगृह्य मां स्फुरन्तीं गृहीत्वा गगनमुदपतत् अभवच्च साम्प्रतमवसितः। अहञ्च दैवात् तवैव जीवितेशस्य हस्ते पतिता इति।

एतदाकर्ण्य तया सह नावमध्यारोहम्। मुक्ता च नौः प्रतिवातं नीयमाना तामेव दामलिप्तां प्रत्युपातिष्ठत। अवतीर्णाश्च वयमश्रमेण। तनयस्य तनयायाश्च नाशात् तुङ्गधन्वा सकलत्र एव गङ्गारोधसि अनशनेन उपरन्तुं प्रतिष्ठते सह तेन मर्त्तुमिच्छति अनुरक्तः पौरजन इत्यश्रुमुखीनां प्रजानामाक्रन्दं शृण्वन् अहं सत्वरं समेत्य अस्मै राज्ञे यथावृत्तमाख्याय तत् अपत्यद्वयं समर्पयम्। प्रीतेन तेन जामाता कृतोऽस्मि, तत्पुत्रश्च मदनुजीवी जातः, चन्द्रसेना च निर्वाधं कोशदासमभजत्। ततश्च सिंहवर्मसाहाय्यार्थमागत्य भर्त्तुस्ते दर्शनसुखमनुभवामि इति।

श्रुत्वा राजवाहनः चित्रेयं दैवगतिः पुष्कलः पुरुषकार इति तमभिनन्द्य मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास।

इति षष्ठोच्छ्वासः।

# अथ सप्तमोच्छ्वासः ।

——oo——

## मन्त्रगुप्तचरितम् ।

सोऽब्रवीत् देव ! नगरन्ध्रगतस्य ते गतिं ज्ञास्यन् कदाचिदहं गतः कलिङ्गनगरम् । तत्र श्मशानसन्निकृष्टस्य कस्यचित् तरोः किसलयसंभृते तले स्थित्वा निद्रामभजे । निशीथे शीतवातस्पर्शात् गतनिद्रः कथं खलेन अनेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन एष रागाविष्ट इत्थं विरक्तीकृतः, अपि क्रियेत केनचित् शक्तिमता अस्य सिद्धेरन्तराय इति किङ्करस्य कातरं विलपितमाकर्ण्य क एष सिद्धः का च सिद्धिः किम्वा किङ्करेण करिष्यते इति दित्सुः तद्गतया दिशा किञ्चित् सविधवर्त्ती नरास्थिशकलरचितालङ्कारं भस्मकृताङ्गरागं जटिलं हिरण्यरेतसि तिलसिद्धार्थादीन् विकिरन्तं कञ्चिददर्शम् । तस्याग्रे कोऽपि किङ्करः तिष्ठति, सोऽनेन निकृष्टाशयेन आदिष्टः गच्छ कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां नाम कन्यागृहात् इह आनय इति । तेन च तत्क्षणादानीतां त्रासकम्पितकलेवरां हा तात ! हा मातः ! इति क्रन्दन्तीं केशेषु गृहीत्वा असिना कर्त्तितुमचेष्टत । अहन्तु झटिति तस्य हस्तात् तमसिमाच्छिद्य तेन तस्य शिरश्छित्वा कस्यचित् सालतरोः स्कन्धे न्यधिषि । तदवलोक्य स किङ्करः प्रहृष्टः प्रोवाच आर्य्य ! अनार्य्यस्य अस्य पारतन्त्र्यात् अद्य मोचितोऽस्मि कल्याणिना, साधु कृतम् । दयानिधेर्भवतः काञ्चिदाज्ञां चिकीर्षति अयं जनः, आदिशतु भवानिति प्रार्थयीत् । आदिशच्च तं सखे ! इयमकोशार्हा राजनन्दिनी

अनेन दुराचारेण अत्यर्थं क्लेशिता, तदद्य एनां स्वनिलयं नाश्च-दितः किञ्चिन्मे प्रियमस्ति इति।

तदाकर्ण्य सा चञ्चलतारकां दृशं तिर्य्यक् सञ्चारयन्ती रागलज्जान्तरवर्त्तिनी किमपि मन्दमधुरम् अभाषत आर्य्य! किमर्थमिमं जनं कालहस्तादाच्छिद्य रणरणिकावाहिनि अनङ्गरागसागरे निक्षिपसि, यद्यस्ति दया अस्मिन् जने, तदा त्वया अनन्यसाधारणः क्रियतामयं जनश्चरणसेवायाम्। यदि च कन्यापुरे रहस्यभेदादनर्थं आशङ्कते, तदपि नास्ति रक्षातरा हि नः सख्यः यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्ते इति। अहञ्च तद्दर्शनेन नितरां रागपूर्णस्तं किङ्कर-मगादिषम् इयं चार्वङ्गी यथा कथयति तथा चेत् न आचरेयं नयेत मदनः क्षणेन मामन्त्यां दशां तत् सहानया हरिणाक्ष्या जनमिमं कन्यकागारं नय। नीतश्चाहं तेन किङ्करेण राक्ष-सेन कन्यकापुरम्। तत्र एकदेशे प्रियानिदेशात् क्षणमति-ष्ठम्। सा च सर्वाः सखी निद्रिताः हस्तपरामर्शेन प्रबोध्य सर्वं वृत्तान्तं ताभ्यः कथयित्वा ताभिः प्रणताभिरतिगौरवात् पूज्यमानं मां निजनिकेतनमनैषीत्। ततश्च अहं सखीजनेन अतिदक्षिणेन दृढतरीकृतस्नेहनिगड़ः तया सङ्गत्य सुखेन कालमगमयम्।

कदाचित् मधुमासे कलिङ्गनाथः सहाङ्गनाजनेन तनयया सकलेन च पौरजनेन त्रयोदश दिनानि सागरतीरकानने क्रीड़ारसेन कालं नयन् अन्ध्रनाथेन जयसिंहेन रन्ध्रान्वेषिणा अनेकबलसमेतेन द्राक् आगत्य अग्टह्यत सकलत्रः। सा च प्रिया मे सह सखीजनेन आनीयत तं देशम्। अहन्तु तां प्रियां चिन्तयन् किंकर्त्तव्यविमूढ़ोऽतर्कयम् गता सा कलिङ्गराज-कन्या पितृभ्यां सहारिहस्तं निरस्तधैर्य्यः स राजा नियतं तां

सन्निष्ठेत् तदसह्या च सा सती विषोद्बन्धनादिना सद्यः सन्तिष्ठेत, तस्याञ्च मृतायाम् अयं जनो हन्येत कामेन, कात्र गतिः इति ।

अत्रान्तरे अन्ध्रदेशात् कश्चित् अग्रजन्मा समायातः । तन्मुखात् श्रुतं जयसिंहेन जिघांसितः स कर्दनः कनकलेखादर्शनजेन रागेणैव अरच्यत । सा च राजदारिका यक्षेण केनचित् आविष्टा न तिष्ठति कस्यापि अग्रे नरस्य । जयसिंहश्च तत् निराकरणार्थं नानाचिकित्सकादिसंग्रहेण आयस्यति । न चास्ति सिद्धिः इति ।

अहन्तु तदाकर्ण्य सञ्जातप्रत्याशः जटाचीरकन्याधरः सन्न्यासी भूत्वा कांश्चित् शिष्यानग्रहीषम् अकार्षञ्च तान् नानाश्चर्य्यक्रियाविप्रलब्धाज्जनादाहृतान्नवस्त्रादिदानेन अत्यन्तानुरक्तान् । अयासिषञ्च अन्ध्रनगरम् । तत्र कस्यचित् महासरसस्तीरकानने कृताश्रमः शिष्यवर्गैरित्थमकीर्त्त्ये दिशि दिशि य एषः यतिः सरस्तीरे स्थण्डिलशायी तिष्ठति तस्य सर्वाणि सरहस्यानि सषड़ङ्गानि छन्दांसि रसनाग्रवर्त्तीनि अन्यानि च शास्त्राणि, यस्य यत् ज्ञातुमिच्छा स्यात् स तत्सकाशात् तस्य निर्णयं करोतु, अस्य न अलीकं किञ्चिदपि, मूर्त्तिमान् दयाराशिरयम् अस्य चरणरजसा शिरसि स्पृष्टस्य चिकित्सकैरप्रतिकार्य्यस्य व्याधेरुपशमः स्यात् न तस्य शक्तेः शक्यमियत्ताज्ञानम् इति ।

इयञ्च वार्त्ता कर्णपरम्परया तस्य राज्ञो जयसिंहस्य श्रुतिपथमगात् । स च अहरहरागत्य आदरातिशयेन शिष्यान् सन्तोष्य तन्मुखेन काङ्क्षितार्थसाधनाय मामयाचत । अहन्तु ध्यानधीरः सहेलं निरीक्ष्य एनमकथयं तात ! स्थाने एष हि यत्नः तस्य कन्यारत्नस्य सर्वलक्षणसमेतस्य अधिगतिः ससागरायाः

पृथिव्याः आसादनाय साधनं न च स यक्षस्तदधिष्ठायी केन-चित् नरेन्द्रेण प्रतिकर्त्तुं शक्यः। तदत्र सहस्व त्रीणि अहानि यैरहं यतिष्येऽस्य अर्थस्य साधनाय इति तथा आदिष्टे च हृष्टे नृपे गते निशि निशि तमिस्रायां निशीथे तदेकतः सरस्तटं तीर्थसन्निकृष्टं खनित्रेण छिद्रीकृतान्तरालमकार्षम्। कृत्वा च घनशिलाच्छन्नच्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं प्रातः स्वनिकेतनं न्यशिश्रयम्।

गते च दिनत्रये स राजा समागत्य कृतानतिः कृताञ्जलिश्च मत्पुरोवर्त्ती मया आदिष्टः अनुद्योगिनं कदाचित् श्रियः न संश्रयन्ते, साधीयसा ते सच्चरितेन आकृष्टचेतसा मया सरस्तथा संस्कृतं यथा तेऽद्य सिद्धिः स्यात्। तदद्य निशीथे गाहयित्वा एतत् सरः सलिलतले सञ्चारिणः वायून् सन्निगृह्य शयानेन जलसङ्घातस्य आरटितं क्षणात् जनिष्यमानं श्रोतव्यम्। ततः शान्ते तद्रटिते क्लिन्नगात्रः किञ्चिदारक्तनयनः येनाकारेण निर्य्यास्यसि, तमवलोक्य सर्वजनानन्दजननं स यक्षः स शश्यति अग्रतः स्थातुं कन्यकायाश्च तस्या हृदयं सद्य एव त्वयि अतिसक्तं स्यात् करतलगतञ्च भूमण्डलं नात्र संशयः। इच्छसि चेदिमं विधिं नानाशास्त्रवेदिभिरधिकृतैरन्यैश्च हितैराकलय्य जालिकशतमानाय्य यथेष्टदृष्टान्तरालं सरः क्रियेत, सैनिकैश्च यथास्थानस्थितैः रक्षा विधेया। कस्तत् जानाति यत् छिद्रेणारर्यास्थकीर्षन्तीति। तत् तस्य हृदयहारि जातं तदधिकृतैश्च तदनुमोदितम्। स पुनर्मया उक्तः राजन्! अत्र तवाधिकारे चिरं स्थितं न चैकत्र नः चिरस्थानं युक्तं तत् कृतकृत्यः पुनर्मां न द्रक्ष्यसि, तव राष्ट्रे यत् अस्मादि आसादितं तस्य किञ्चित् अनुपकृत्य न गन्तव्यं तस्मादद्य सिद्धं गच्छेदानीं गृहान्, यथासमयमागत्या-

र्थसिद्धये यतेथा इति। स किल कृतज्ञतां दर्शयन् भाविनि मद्विरहे कातर इव गृहानयासीत्। अहञ्च निर्जने निशीथे सरस्तीरस्तम्बनिलीनः ईषच्छिद्रदत्तकर्णोऽतिष्ठम्। स च राजा कृतयथादिष्टक्रियः स्थानेषु कृतरक्षाविधानः निःशङ्कं सरःसलिलमगाहत। यथादेशं शयानश्च तत्र सलिलतले तं कन्धरायां दृढं निगृह्य करचरणैस्तथा प्राहरं यथा स सद्यः प्राणानजहात्। आकृष्य च तच्छरीरं तीरच्छिद्रे निधाय नीरान्निरगच्छम्। सद्यः सङ्कतानाञ्च सैनिकानां तदत्यचिन्त्यत आकारान्तरग्रहणम्।

अथ गजस्कन्धगतः राजभवनं प्रविश्य कथमपि निशां नीत्वा प्रातः कृतनित्यक्रियः सिंहासनासीनः पार्श्ववर्त्तिनोऽमात्यादीन् प्रावोचं दृश्यतां शक्तिरार्षी, अद्य नास्तिकानां जायेत लज्जानतं शिरः। ते च हर्षविस्मयाक्रान्तचेतसः जय प्रभो! स्वतेजसातिशय्य दशदिश इत्याशास्य यथाधिकारमन्वतिष्ठन्। अहञ्च प्रियायाः सखीं शशाङ्कसेनां रहसि समागतामब्रवं कच्चिदयं दृष्टस्त्वया जन इति। सा मां निरीक्ष्य हर्षकाष्ठां गता बद्धाञ्जलिर्नितरां हृष्टः यदि न स्यादैन्द्रजालिकस्य जालं तत् कथयतु देवः किमेतदिति सनिर्बन्धमकथयत्। अहञ्चास्यै सर्वं यथावदाख्याय तन्मुखेन प्रियां प्रीणयित्वा तया एव दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया सङ्गत्य अन्ध्रकलिङ्गराज्यं कलिङ्गनाथे न्यस्य अरिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यार्थं बहुभिः साधनैः समागतः सखिजनसमेतस्य देवस्य यादृच्छिकदर्शनसुखमनुभवामीति।

तदाकर्ण्य देवो राजवाहनः चित्रमिदं महामुनेर्वृत्तमिति स्मितविकसिताननः तमभिनन्द्य विश्रुते दृष्टिं चिक्षेप।

इति सप्तमोच्छ्वासः।

## अथ अष्टमोच्छ्वासः ।

### अथ विश्रुतचरितम् ।

सोऽब्रवीत् देव ! मयापि पर्य्यटता विन्ध्याटव्यां कोऽपि कुमारोऽष्टवर्षीयः क्वचित् कूपाभ्यासे क्लिश्यन् दृष्टः त्रासगद्गदमगदत् महाभाग ! क्लिष्टस्य मे क्रियतां किञ्चित् साहाय्यं मम प्राणापहारिणीं पिपासां प्रतिकर्त्तुमुदकमुत्तोलयन्निह कूपे कोऽपि स्थविरः ममैकशरणभूतः पतितः, तं नाहमुद्धर्त्तुमलमिति । अहं तदाकर्ण्य व्रतत्या कयापि वृद्धमुत्ताय्य तञ्च बालं कथमपि उद्धृताभिरद्भिः फलैश्च पक्वैर्वृक्षात् पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णस्तं वृद्धमभाषे तात ! क एष बालः, कश्च भवान् कथमिमं देशमापद्य आपदि पतित इति सोऽश्रुगद्गदमवादीत् महाभाग ! आसीत् विदर्भाधिपतिः परमधार्मिकः राजनीतिकुशलः पुण्यवर्म्मा नाम । तस्मिंश्च कालेनोपरते तत्सुतोऽनन्तवर्म्मा नाम तत्सिंहासनमध्यतिष्ठत् स तु सर्वगुणसम्पन्नोऽपि दण्डनीत्यां नातिकुशल आसीत् । एकदा रहसि वसुरक्षितो नाम महामन्त्री तं दण्डनीत्यनुशीलने सविशेषमनुरुरोध दर्शयामास च तदनुशीलनस्य फलमननुशीलनस्य च दोषम् ।

स तु तदाकर्ण्य स्थान एव गुरुभिरुपदिश्यते तथा क्रियते इत्युक्त्वान्तःपुरगतः तद्वार्त्तां प्रमदानां सन्निधौ समाचष्ट । तत्र स्थितस्तस्य नर्म्मसचिवश्चित्तानुवृत्तिकुशलः सङ्गीतव्यापारनिपुणः परमर्मान्वेषणपरः सकलदुर्णयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम सस्मितमभाषत देव ! दैवानुग्रहेण यदि कश्चिद् भाजनं भवति विभूतेः, तं

विविधकौशलैः प्रतार्थ्य स्वार्थं साधयन्ति धूर्त्ताः। सम्यक् नीतिशास्त्रपरिशीलनं केवलं क्लेशाय, नात्र अख्वपि सुखमुपकारो वा, यावता च नयेन विना न लोकयात्रा, स लोकत एव सिद्धः न अत्र शास्त्रेणार्थः, स्तनन्धयोऽपि विना उपदेशं जनन्याः स्तन्यं पिवति, तदपास्य अतियन्त्रणाम् अनुभूयतामिन्द्रियसुखानि। येऽप्युपदिशन्ति इन्द्रियाणि जेतव्यानि, अरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु च अजस्रं प्रयोज्यः, सन्धिविग्रहादिचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखावकाशो न देय इति तैरपि धूर्त्तैर्युक्तचौर्य्यार्जितं धनं दासीगृहेषु भुज्यते, ये च नीतिशास्त्रकाराः शुक्राङ्गिरसपराशरप्रभृतयः, तैः किमरिषड्वर्गो जितः? कृतं वा तैः शास्त्रानुष्ठानम्?। तैरपि प्रारब्धेषु कार्य्येषु दृष्टे सिद्धग्रसिद्धी। दैवस्य किमनुपपन्नम्? सर्वलोकाराध्या जातिः, नवं वयः, दर्शनीयं वपुः, अपरिमिता विभूतिः, एतत् सर्वं सर्वभोगवर्जितः मा कथा वृथा, सन्ति ते दन्तिनां दशसहस्राणि, हयानां लक्षत्रयम् अनन्तञ्च पादातं पूर्णान्येव हेमरत्नैः कोशगृहाणि। सर्व एव जीवलोकः युगसहस्रं भुञ्जानः न क्षयं नेष्यति। जीवितं हि नाम क्षणिकं तत्रापि भोगयोग्यं वयः अत्यल्पम् अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते नार्जितस्य लवमपि नास्वादयितुमीहन्ते। किं बहुना राज्यभारम् अन्तरङ्गेषु समर्प्य अप्सरःप्रतिरूपाभिरन्तःपुरिकाभिः रममाणो गीतपानगोष्ठीषु यथर्त्तु अनुभवन् यथार्थं कुरु शरीरलाभमिति।

तदाकर्ण्य अन्तःपुरिकागणः प्राहसीत् जननाथश्च सम्प्रहृष्टः समुत्तिष्ठन् तं प्रणत मुत्थाप्य ननु हितोपदेशाद् गुरवो भवन्तः किं गुरुत्वविपरीतमनुष्ठितमिति वदन् क्रीड़ानिर्भरमतिष्ठत्।

अथ हृदमन्त्रिणोपदिष्टं वचसा अनुमोदते स्म परं कार्य्यतः न अनुतिष्ठति स्म, क्रमेण नयशास्त्रे तस्मिन् विद्वेषमेव अदर्शयत् अभवच्च कामप्रवृत्तो भोगसुखेषु नितरामासक्तः। एवं गते चन्द्रपालितो नामाश्मकेन्द्रस्य वसन्तभानोर्मन्त्रिपुत्रः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकैश्च प्रच्छन्नकिङ्करैर्गूढ़पुरुषैश्च परिवृतोऽभ्येत्य विविधकौशलैः विहारभद्रमात्मसादकरोत्। अलभत च अमुनैव द्वारेण राजन्यास्पदम्। स च लब्धरन्ध्रः राजानं व्यसनेषु व्यसनानां गुणव्याख्यानेन नितरां प्रीणयन् तदेकासक्तमकार्षीत्। असावपि राजा गुरूपदेशमिव तन्मतमन्ववर्त्तत। प्रकृतयश्च तच्छीलानुवर्त्तिन्यः विशृङ्खलमसेवन्त व्यसनानि। सर्वश्च समानदोषतया न कस्यापि दोषान्वेषणे अयतिष्ट। समानभर्त्तृप्रकृतयश्च राष्ट्राध्यक्षाः स्वानि स्वानि राजस्वादीनि स्वयमभक्षयन्। क्रमेण आयद्वाराणि व्यशीर्य्यन्त व्ययाश्च विभोर्विटविधेयतया प्रतिदिनमवर्द्धन्त। सामन्तपौरजानपदाश्च समानशीलतया उपारूढ़विश्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारमत्यक्रामन्। तदङ्गनासु च राजा ते च राजान्तःपुरिकासु निर्भयं विहरन्ति स्म। सर्वश्च कुलाङ्गनाजनः भग्नचारित्रबन्धनस्तृणाय अपि न गणयित्वा भर्त्तॄन् जारेषु अरमन्त। तन्मूलाश्च विवादाः सक्रोधानामुदभवन् अहन्यन्त च दुर्बलाः प्रबलैः। अपहृतानि धनवतां धनानि तस्करादिभिः हृतबान्धवा हृतवित्ता बधबन्धातुराश्च मुक्तकण्ठमाक्रोशन् अश्रुकण्ठाः प्रजाः। दण्डश्च अयथाप्रयुक्तो भयक्रोधावजनयत्। कृशकुटुम्बेषु लोभः पदमाधत्त विमानिताश्च तेजस्विनो मानेन अदह्यन्त।

अस्मिंश्च समये अश्मकेन्द्रप्रयुक्ताः तीक्ष्णरसदायिनो गूढ़पुरुषाः नानाविधकौशलैः प्रक्षपितप्रवीरमनन्तवर्म्मकटकं जर्जरमकुर्वन्। अथ वसन्तभानुर्भानुवर्म्माणं नाम वनचराधिपं प्रोत्साह्य अनन्तवर्म्मणा व्यग्राहयत्। अनन्तवर्म्मा च तदाक्रान्तराष्ट्रपर्य्यन्तस्तमभियोक्तुं बलसमुत्थानमकरोत्। अश्मकेन्द्रश्च वसन्तभानुः सर्व्वेभ्यः सामन्तेभ्यः प्राक् आगत्य अस्य प्रियतरोऽभूत्। अपरे च सामन्ताः प्रभुसाहाय्यार्थं समागताः नर्म्मदारोधसि शिविरं संन्यविशन्। अस्मिंश्च अवसरे राजा अनन्तवर्म्मा महासामन्तस्य कुन्तलपतेरवन्तिदेवस्य नर्त्तकीं च्मातलोर्व्वशीं नामाहूय चन्द्रपालितादिभिर्नृत्यमद्राक्षीत्। अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। ततोऽश्मकपतिः कुन्तलेश्वरमेकान्तेऽवदत् प्रमत्त एष राजा, कलत्राणि नः परामृशति, कियत्यवज्ञा सोढव्या, मम शतमस्ति दन्तिनां पञ्च शतानि ते तदावां सम्भूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं सासिक्यनाथं नागपालञ्च उपजपाव ते च अवश्यमस्याविनयमसहमाना अस्मन्मतेनैव उपवर्त्तेरन्। अयञ्च वनेचराधिपः भानुवर्म्मा प्रियं मे मित्रम्। अमुना एनं दुर्व्विनीतमग्रतः अभियुक्तं पृष्ठतः प्रहरेम। कोशवाहनञ्च विभज्य गृह्णीम इति।

हृष्टेन च अमुना तथा अस्तु इति स्वीकृते तानपि सामन्तानसौ वसन्तभानुः स्वमतावस्थापयत्। परेद्युश्च सर्व्वे मिलित्वा अनन्तवर्म्माणं व्यनाशयन्। वसन्तभानुश्च तत्कोशवाहनं शाठ्येन सर्व्वान् सामन्तान् भ्रंशयित्वा आत्मसात् कृत्वा भानुवर्म्माणं कियतांशेन सन्तोष्य अनन्तवर्म्मराज्यमग्रहीत्।

अस्मिंश्च अवसरे मन्त्रिवृद्धो वसुरक्षितः केषित्मौलैः

सम्भूय बालमेनं भास्करवर्म्माणम् अस्य एव ज्यायसीं भगिनीं त्रयोदशवर्षीयां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुन्धरामादाय अपसर्पन् अस्या आपदो भावितया दाहज्वरेण देहमजहात्। किंकर्त्तव्यमूढैश्च अस्माभिः नीत्वा माहिष्मतीं भर्त्तृहैमातुराय भ्रात्रे मित्रवर्म्मणे सापत्न्या देवी दर्शिता। ताञ्च आर्य्यामसौ अन्यथा अभ्यमन्यत। निर्भर्त्सितश्च तया सुतमिममखण्डचारित्रा राजानं चिकीर्षति इति नैष्टुर्य्यात् बालमिममजिघांसीत्। इदन्तु ज्ञात्वा देव्या अहमाज्ञप्तः तात नालीजङ्घ! जीवता अनेनार्भकेण यत्र क्वचिदवधाय जीव, जीवेयञ्चेदहमपि एनमनुसरिष्यामि, ज्ञापय च मां क्षेमवार्त्तामिति। अहन्तु सङ्कुले राजकुले कथञ्चिदपसार्य्य एनं विन्ध्याटवीं व्यगाहिषि। पादचारक्लान्तमेनं क्वचिद् घोषे कानिचिदहानि विश्रमय्य तत्रापि राजपुरुषसम्पातभीतो दूरमपासरम्। तत्र अस्य दारुणपिपासापीड़ितस्य पयो दातुकामः कूपेऽस्मिन् पतितस्त्वया एवमनुगृहीतः त्वमेव अस्य शरणमेधि विशरणस्य राजसूनोरित्यञ्जलिमबध्नात्। का जातिरस्य मातुरिति पृष्टे मया तेनोक्तं पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुमधन्वनोऽस्य माता जातेति। यदि एवमेतन्मातुर्मेत्पितुश्चैको मातामह इति सस्नेहं तमहं सस्वजे। तत्रैव सिन्धुदत्तपुत्राणां कतमस्ते पितेति अनुयुक्तो सुश्रुत इत्युक्तवन्तं मासमौ श्रुत्वा भृशमनन्दत्। अहन्तु तं नयावलिप्तम् अश्मकं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयमिति प्रतिज्ञाय कथमस्य क्षुधं शमयेयमिति यावदचिन्तयं तावत् आपतितौ कस्यापि व्याधस्य वीनिघ्नतोत्य द्वौ मृगौ, स च व्याधः। अहन्तु तस्य हस्तादिषुद्वयं कोदण्डञ्च आच्छिद्य मृगावबधिषं

तत्रैकः सपत्राकृतः अपरो निष्पत्राकृतः पपात। एकञ्च मृगं मृगयवे दत्त्वा अन्येन तयोरात्मनश्च वृत्तिमकार्षम्। तस्मिंश्च कर्म्मणि तुष्टं किरातमपृच्छम् अपि जानासि माहिष्मतीवृत्तान्तमिति। असौ आचष्ट तत्र व्याघ्रत्वचो विक्रीय अद्य एवागतोऽहं किं न जानामि, प्रचण्डवर्म्मा नाम चण्डवर्म्मानुजो मित्रवर्म्मदुहितरं मञ्जुवादिनीं लिप्सुरभ्येति तेन एवोत्सवोत्तरा पुरीति।

तदाकर्ण्य कर्णे वृद्धमब्रवं धूर्त्तो मित्रवर्म्मा दुहितरि सम्यक् प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन बालकमाकृष्य जिघांसति, तत्प्रतिगत्य कुशलमस्य मद्वार्त्ताञ्च देव्यै रहो निवेद्य कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशः कार्य्यः, स दुर्म्मतिरन्तःप्रीतो वहिर्दुःखं दर्शयन् देवीमनुनेष्यति। पुनस्तया तन्मुखेन स वाच्यः, यदपेक्षया त्वन्मतमतिक्रमितवती सोऽपि बालः पापेन मे परलोकमगात् अद्य तु त्वदाशयवर्त्तिनी एवाहमिति स तथोक्तः परां प्रीतिमापत्स्यते। अथ विषयुक्तया मालया असौ धर्षयितुमागतः पापः स एवायमसिप्रहारस्ते पापीयसो भवतु यदि अस्मि पतिव्रता इति तथा प्रहर्त्तव्यः, यथा सद्य एव प्राणान् त्यजेत्। ततश्च सा माला गूढमम्भसि क्षालिता स्वदुहित्रे देया, मृते तस्मिन् तस्याञ्च निर्व्विकारायां सत्यां सती इत्येवैनां प्रकृतयोऽनुवर्त्तिष्यन्ते। प्रचण्डवर्म्मणे च सन्देष्टव्यम् अनाथकमिदं राज्यमनेनैव सह बालिका इयं स्वीकार्य्या इति। आवाञ्च कापालिकवेषच्छन्नौ देव्या एव दीयमानभिक्षौ पुराद्‌ वहिरुपश्मशानं वत्स्यावः। पुनराप्य-प्रायान् पौरवृद्धान् मन्त्रिवृद्धांश्च एकान्ते देवी ब्रूयात् अद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः, चतुर्थेऽहनि प्रचण्डवर्म्मा मरिष्यति, पञ्चमेऽहनि रेवातटवर्त्तिनि मद्भवने परीक्ष्य कतिषु

निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालं ते पित्र्ये पदे प्रतिष्ठापयिष्यति, स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य रक्षितः, सा च इयं वत्सा मञ्जुवादिनी तस्य द्विजसुतस्य दारत्वेन कल्पितेति। तदेतदतिरहस्यं युष्मासु सुगुप्तं तिष्ठतु यावदेतदुपपत्स्यते इति।

स च स्थविरोऽतिहृष्टः प्रयातः सर्वमर्थं यथादिष्टमसम्पादयत्। प्रतिदिशञ्च लोकवादः प्रासर्पत् अहो माहात्म्यं पतिव्रतायाः, असिप्रहार एव असौ मालाप्रहारस्तस्मिन् जातः, न शक्यमुपधियुक्तमेतद् वक्तुं यतस्तदेव दत्तं दाम दुहितृस्तनमण्डनमिव जातं नास्या मृत्युः योऽस्याः पतिव्रतायाः शासनमतिवर्त्तते स भस्मैव भवेदिति।

अथ महाव्रतिवेशं मां पुत्रञ्च भिक्षार्थं प्रविष्टं दृष्ट्वा सा देवी प्रस्नुतस्तनी सहर्षमब्रवीत्। भगवन्! अनुगृह्यतामयं जनः मम एकः स्वप्नो दृष्टः, स किं सत्यः? मयोक्तं फलमस्याद्य एव द्रक्ष्यसि इति। अथ मद्दर्शनरागवद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य भूयोऽवदत् तच्चेन्मिथ्या, सोऽयं युष्मदीयो बालकपालो मया निरोद्धव्य इति। अहन्तु तथा इत्युक्त्वा पुष्ठत आयान्तं नालीजङ्घमपृच्छम्। क्व असौ प्रचण्डवर्म्मा? सोऽवदत् राज्यमिदं मम इति कृतमतिरास्थानमण्डप एव तिष्ठति। यदि एवमुद्याने तिष्ठ इति तं वृद्धमादिश्य तस्याकारैकपार्श्वे परिच्छदान् अङ्गादपनीय तद्रक्षणे राजपुत्रं नियुज्य कृतकुशीलववेषः प्रचण्डवर्म्माणमेत्य रञ्जयन् प्रमत्तमेनं सहसा क्षुरिकया वक्षसि प्रहृत्य अन्यांश्च तदनुचरान् निपात्य प्राकारमत्यलङ्घयम्। आगत्य च पुनर्नालीजङ्घसविधे प्रतिमुक्तपूर्ववेषः सह कुमारेण मत्कर्म्मतुमुलराजवर्त्मना श्मशानोद्देश-

मध्यगाम। पूर्वमेव तस्मिन् दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं स्थूलप्रस्तरस्थगितवाह्यद्वारं विलम्। निशीथे च नालीजङ्घोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तं विलमावां प्रविश्य तूष्णीमतिष्ठाव।

देवी तु पूर्वेद्युः प्रचण्डवर्म्मणे अग्निसंस्कारं दत्त्वा चण्डवर्म्मणे तामवस्थामश्मकेन्द्रोपधिकृतामेव सन्दिश्य उत्तरेद्युः प्रत्यूषसि पौरामात्यपरिवृता अभ्येत्य भगवतीमर्चयित्वा सर्वजनसमक्षं तद्भवनं परीक्ष्य सङ्केतानुरूपं महान्तं पटहनादमकारयत्। तेन च नादेनाहं दत्तसंज्ञः शिरसा एव उत्क्षिप्य सप्रतिमं लोहपादपीठम् एकतो निवेश्य निरगमं निरगमयञ्च कुमारम्। अथ यथापूर्वमर्चयित्वा देवीम् उद्घाटितकवाटः प्रत्यक्षीभूय विस्मिताः सर्वाः प्रकृतीरभ्यधां देवी विन्ध्यवासिनी मन्मुखेन एवं वः समाज्ञापयति मया सकृपया शार्दूलरूपेण तिरस्कृत्य रक्षितोऽयं बालोऽद्य दत्तः अद्यप्रभृति मत्पुत्रतया अयं परिगृह्यताम्। मां च अस्य रक्षितारं मन्यध्वं रक्षणवेतनञ्च अस्य स्वसा मञ्जुवादिनी इति।

श्रुत्वैतत् अहो! भाग्यवान् भोजवंशः यस्य त्वं देवीदत्तो नाथ इति परां प्रीतिमन्वभवन् प्रकृतयः। सा तु मे श्वश्रूस्तदहरेव परमप्रीता यथाविधि दुहितरं मह्यमदात्। आगतायाञ्च यामिन्यां सम्यगेव तद्विलमपूरयम्। सर्वे च मां देवांशं राजपुत्रञ्च देवीपुत्रं मन्यमाना मदाज्ञां नात्यवर्त्तन्त। कुमारञ्चविधिवदुपनाय्य पाठयन् नीतिशास्त्रं राजकार्य्यमन्वतिष्ठम्।

अथ क्रमेण मित्रवर्मममन्त्रिणमार्य्यकेतुं नाम कोशलत्वात् कुमारमातृपक्षं मन्त्रिगुणोपेतं नालीजङ्घेन परीक्ष्य सहायं कृत्वा सत्यशौचयुक्तान् अमात्यान् विविधव्यञ्जनांश्च

गूढ़पुरुषान् नियोजयन् स्वपरराष्ट्रेषु विविधेन कौशलेन उपायान् प्रयुञ्जन् अतिष्ठम् ।

व्यचिन्तयञ्च सर्वोऽपि अतिशूरः सेवकवर्गो मयि तथानुरक्तो यथा मदाज्ञया जीवितमपि तृणाय मन्यते । राज्यहितयसैन्यसामग्र्या च न अहमश्मकेन्द्राद् वसन्तभानोर्न्यूनो नीत्याविष्टश्च । अतस्तं पराजित्य विदर्भपतेरनन्तवर्म्मणस्तनयं भास्करवर्म्माणं पित्र्ये पदे स्थापयितुमलमस्मि । अयञ्च राजसूनुर्भवान्याः पुत्रः अहञ्च तत्साहाय्ये नियुक्त इति सर्वत्र किंवदन्ती । इदञ्च मत्कपटं न केनापि विदितम् । अतएवास्मिन् भास्करवर्म्मणि अयमस्मत्स्वामिनोऽनन्तवर्म्मणः पुत्रो भवान्याः प्रसादादेतद्राज्यमवाप्स्यतीति बह्वाशा वर्त्तन्ते । अश्मकेन्द्रबलञ्च राजपुत्रस्य भवानीपुत्रत्वं विदित्वा दैवशक्तेः पुरो न बलवती मानवी शक्तिरिति अस्माभिर्विग्रहे चलचित्तमिवोपलक्ष्यते । मौलाः प्रकृतयश्च स्वत एव राजसुताभ्युदयकाङ्क्षिण्यः, मया पुनर्दानमानादिना विश्वासिता विशेषेण राजपुत्रमेवाभिकामयन्ते । अश्मकेन्द्रान्तरङ्गाश्च भृत्याः मदीयैः पुरुषैः प्रभूतां प्रीतिमुत्पाद्य मदाज्ञया रहसि इत्थमुपजप्ताः युयमस्मन्मित्राणि, मित्राणाञ्च शुभोदर्कं वचो वाच्यमेव । ये भवनीवरपुत्रं त्यक्त्वा वसन्तभानोः पक्षीया योत्स्यन्ति तेषां नियतमन्तकभवनगमनम् । तद् यदि सपरिजनः सपुत्रकलत्रः सुखेन स्थातुमिच्छथ तदा अनन्तवर्म्मतनयं भास्करवर्म्माणमनुसरथ । इति आकर्ण्य बहवोऽश्मकेन्द्रभृत्या मद्वशे एवावर्त्तन्त ।

अथाश्मकेन्द्रोऽपि अचिन्तयत् राजसूनोर्मौलाः प्रजाः सर्वा एव एनमेव प्रभुमभिलषन्ति, मदीयश्च आभ्यन्तरो भृत्यवर्गः भिन्नमना इव लक्ष्यते । यदि अहमुपेक्षमाणस्तिष्ठामि

तत उत्पन्नोपजापं स्वराज्यमपि नालं रक्षितुम्। अतोऽवि-लम्बमेव अभिन्नमनोभिः कतिपयैर्बलैः समेतः विग्रहं रचयामि इति कृतमतिः मृत्युमुखमिवास्मत्सैन्यमभ्ययात्। तमभ्या-यान्तमालोक्य राजपुत्रेण सार्द्धं तुरगाधिरूढोऽभ्यसरम्। तावत् सर्वा एव तत्सेना यदयमेतावतोऽपरिमितस्य अस्मत्-सैन्यस्य उपरि एक एव अभ्यागच्छति तत्र भवानीवर एव असाधारणो हेतुरिति निश्चित्य आलेख्यलिखिता इव अवस्थिताः।

ततो मयाभिगम्य सङ्गराय समाहूतो वसन्तभानुः समेत्य मामसिप्रहारेण दृढमभ्यहन्। अहञ्च शिक्षाबलेन विफ-लिततत्प्रहारः प्रतिप्रहारेण तं विनाश्य तच्छिरोऽवनौ विनि-पात्य सैनिकान् सर्वान् अवदम् अतःपरमपि ये युयुत्सवः, ते समेत्य मया सह युध्यन्ताम्। नो चेत् राजतनयचरणशरणा भवन्तु। मद्वचनमाकर्ण्य सर्वेऽपि अश्मकेन्द्रसेवकाः स्वस्व-वाहनेभ्यः समवतीर्य्य राजसूनुमाश्रित्य तद्वशवर्त्तिनोऽभवन्। ततोऽहमश्मकराज्यं राजसूनुसाद् विधाय तद्रक्षणार्थं मौलान् स्थानधिकारिणो नियुज्य आत्मीयभूतेन तत्सैन्येन साकं विद-र्भान् अभ्येत्य राजधान्यां पितेव पदे न्यवेशयम्।

अथ एकदा माता सहावस्थितं तं राजानं व्यजिज्ञपम् मम एकस्य कार्य्यस्य आरम्भश्चिकीर्षितः, स यावन्न सिध्यति तावन्मया न कुत्रापि अवस्थातुं युक्तम् अत इयं मद्भार्य्या त्वद्भगिनी मञ्जुवादिनी कियन्त्यहानि त्वदन्तिकमेव तिष्ठतु। अहं यावदिष्टजनोपलब्धं भुवं विभ्रम्य तमासाद्य पुनरत्र समे-ष्यामि। इत्याकर्ण्य मातानुमतेन राज्ञा अभिहितम् आर्य्य! अस्माकमेतद्राज्योपलम्भस्य असाधारणो हेतुर्भवान्। भवन्तं विना क्षणमपि मया राज्यभूरियं न निर्वाह्या। तत् किमिति

ब्रवीति भवान् इति। मया उक्तं त्वया न अत्र किमपि चिन्तनीयं योऽयं ते सचिवरत्नमार्य्यकेतुरस्ति, स ईदृशानां बहूनां राज्यानां धुरं वोढुमलम् अतस्तमत्र नियुज्य गमिष्यामि। इत्येवमाश्वासितोऽपि समाहृकोऽसौ विविधैराग्रहैः कियन्तं कालं मां प्रयाणोपक्रमात् न्यवर्त्तयत्। प्रादाच्च उत्कलाधिपतेः प्रचण्डवर्म्मणो राज्यं मह्यम्। अहञ्च तद्राज्यं स्वायत्तं कृत्वा राजानमामन्त्र्य यावद् भवदन्वेषणार्थं व्रजामि तावत् अङ्गनाथेन सिंहवर्म्मणा स्वसाहाय्याय आकारितोऽत्र समागतः पूर्वपुण्यपरिपाकात् स्वामिना समगंसि।

इत्याकर्ण्य सम्प्रहृष्टाः सर्वे कुमाराः पाटलिपुत्रे यौवराज्यमुपभुञ्जानं पूर्वसङ्केतितं सभार्य्यं सोमदत्तमानाय्य यावत् परस्परमानन्दमनुभवन्ति, तावत् पुष्पपुराद्राज्ञः पत्रमादाय राजहंसस्य समागता राजपुरुषाः प्रणम्य राजवाहनं व्यजिज्ञपन् कुमार! देवस्य पितुस्ते आज्ञापत्रं गृह्यताम्। इत्याकर्ण्य सादरं तद् गृहीत्वा राजवाहनः सर्वेषां शृण्वतां तदवाचयत्। "स्वस्ति श्रीराजहंसभूपतिः पुष्पपुरात् चम्पामधिवसतो राजवाहनप्रमुखानाशास्य निगदति यथा यूयमितो मामामन्त्र्य प्रस्थिताः पथि कस्मिंश्चिद्वनोद्देशे उपशिवालयं स्कन्धावारं निधाय स्थिताः। तत्र राजवाहनं निशि शिवालये शिवपूजार्थं स्थितं प्रातरनुपलभ्य अवशिष्टाः सर्वेऽपि कुमाराः सह एव राजवाहनेन राजहंसं प्रणंस्यामो न चेत् प्राणांस्त्यक्ष्याम इति प्रतिज्ञाय सैन्यं परावर्त्त्य राजवाहनमन्वेष्टुं पृथक् प्रस्थिताः। एवं भवद्वृत्तान्तमाकर्ण्य सैनिकेभ्यः, असह्यशोकसागरे निमग्नोऽहं वामदेवाश्रमं गत्वा तद्विदितं कृत्वैतं वृत्तान्तं प्राणांस्त्यक्ष्यामि इति निश्चित्य तदाश्रमगतस्तं मुनिं प्रणम्य यावत्तिष्ठामि, तावदसौ त्रिकालवेदी विदिताशदभि-

प्राय: सादरमवादीत् राजन्! विदितं ते समीहितम्, एते हि त्वत्कुमाराः राजवाहननिमित्तं कियन्तं कालमापदमासाद्य भाग्योदयात् असाधारणविक्रमकौशलाभ्यां विहितदिग्विजयाः प्रभूतानि राज्यानि उपार्ज्य तव पादाभिवन्दनार्थमचिरेणागमिष्यन्ति तदत्र मा साहसं कार्षीरिति तदाकर्ण्य तत्प्रत्ययाद् धैर्य्यमालम्ब्य स्थितं मामद्य असौ मुनिराज्ञापयत् राजन्! राजवाहनप्रमुखाः सर्वे कुमाराः साम्प्रतं समीहितसिद्धिलाभशोभिनस्त्वम्पायां समेताः, तत् प्रेष्यतामाज्ञापत्रं सेवकैरिति अहमाज्ञापत्रमिदं भवतां प्रेषयम् अतःपरञ्चेत् क्षणमपि विलम्बं विधास्यथ ततो मां जननीञ्च वसुमतीं कथावशेषावेव श्रोष्यथ इति।"

एवं पितुराज्ञापत्रं श्रुत्वैव सराजवाहनाः कुमाराः वशीकृतराज्यरक्षणसमर्थान् आप्तान् पुरुषान् स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां विधाय पूर्ववैरिणं मालवेन्द्रं मानसारं पराजित्य तद्राज्यं वशीकृत्य चण्डवर्म्मणा मन्त्रिणा पूर्वं कारागृहे निक्षिप्तं पुष्पोद्भवं कुमारं सभार्य्यं मोचयित्वा स्वस्वभार्य्यासहिताः पुष्पपुरं गत्वा राजवाहनम् अवन्तिसुन्दर्य्या समेतं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणान् ववन्दिरे। तौ च पुत्रसमागमेन परमानन्दमनुभवन्तौ वामदेवः समीक्ष्य सर्वान् कुमारानाज्ञापयत् भवन्तः सर्वेऽपि साम्प्रतं स्वानि स्वानि राज्यानि गत्वा न्यायेन परिपालयन्तु, यदा च इच्छा पुनर्भवति तदा पित्रोश्चरणाभिवन्दनाय आगन्तव्यम्। ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरसि आदाय तं प्रणम्य पितरौ च दिग्विजयं पुनर्विधाय मुनिसन्निधौ स्थितं पितरं राजहंसमुपागमन्।

अथ राजा कुमाराणां स्वस्वचरितानि आकर्ण्य परमप्रीतो मुनिं सविनयं व्यजिज्ञपत् भगवन्! तव प्रसादादस्माभिर्मनुजमनोरथाधिकं सुखमधिगतम् अतःपरं मम भवच्चरणसन्निधौ स्थित्वा आत्मसाधनमेव विधातुमुचितं तत् पुष्पपुरराज्ये मालवराज्ये च राजवाहनमभिषिच्य अवशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथायथं सम्प्रदाय ते च कुमारा राजवाहनवशवर्त्तिनस्तदेकमत्या समग्रां भुवमकण्टकां यथा उपभुञ्जन्ति तथा विधेयं स्वामिनेति। मुनिरवदत् कुमाराः! अयं वो जनकः वयःसमुचिते पथि वर्त्तमानः, अस्य मदाश्रये स्थित्वा वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयम्। भवन्तश्च पितृसन्निधौ न सुखमवाप्स्यन्ति इति अभिधाय राज्यानि कुमारेभ्यो यथायथं विभज्य प्रादात्। ते च मुनेः पितुश्च आज्ञां शिरसा आधाय राजवाहनं पुष्पपुर्य्यामवस्थाप्य तदनुज्ञया स्वानि स्वानि राज्यानि गत्वा न्यायेन प्रतिपालयन्तः स्वेच्छया पित्रोः सकाशे गतागतमकुर्वन्। एवमवस्थितास्ते कुमाराः सर्वमपि भूमण्डलं परस्परम् ऐकमत्येन परिपालयन्तः परमसुखेन कालमत्यवाहयन्।

इति अष्टमोऽच्छ्वासः।

---

# मुद्राराक्षसनाटकस्य पूर्वपीठिका।



अस्ति मगधेषु कुसुमपुरं नाम नगरम्। तत्रासीत् महाप्रतापो राजा नन्दो नाम, तस्य महिषी रत्नावली नाम। तस्य आसन् नव सूनवः। कदाचित् नन्दसमृद्धि-लोलुपानां युद्धार्थिनां राज्ञां मन्त्रिणो व्यजिज्ञपन् भूपालाः! परमसमृद्धिमान् विचक्षणामात्यो नन्दो निग्रहीतुं न शक्यः अतोऽस्य अमात्यबलमविचार्य्य देवैर्नैतदारम्भणीयं कार्य्य-मिति। ततस्ते नृपतयोऽब्रुवन् भवद्भिर्धीमद्भिरेकमत्या अरत्निमितं समं श्लक्ष्णं नितान्तरम्यं देवदारुखण्डमेकं रहसि सुवर्णपट्टिकायां संस्थाप्य मुद्रामुद्रितं विधाय किमस्य मूलं का वास्य शिखेति विचार्य्यार्य्येण अस्माकं लेखनीयमिति लेख्यं कतिपयतुरगवसनमणिमुक्तासमेतं महाराजय नन्दाय प्रेषणीयमिति ते च तथैवान्वतिष्ठन्।

कदाचित् राजा नन्दः प्रमदवनं प्राविशत्। तत्र प्रविश्य चामरग्राहिण्या सुमङ्गलाख्यया कयापि किङ्कर्य्या सह चलदलतरोरधस्तादतिष्ठत्। तत्र च तत्फलकणिकां वदनेन आदाय द्रुततरं गच्छन्तीं पिपीलिकापङ्क्तिमा-लोक्य सविस्मयः स्मितमकरोत्। सुमङ्गलापि राज्ञः स्मित-मवलोक्य स्मितमकरोत्। ततो राज्ञा कथं त्वया स्मितं कृतमित्यभिहिता सा न किञ्चित् कारणं मम स्मितस्य परं महाराजस्य स्मितदर्शनेन मम स्मितं जातमिति अव-दत्। ततश्च राजा मत्स्मितहेतुमविज्ञाय त्वया न स्मितं कृतं मया ज्ञायते, तत् मत्स्मितहेतुरवश्यं त्वया वक्तव्यः नोचेत् वधिष्यामि त्वामिति तर्जयामास। उक्तञ्च,

वृथा स्मितं वृथालापं न कुर्य्याद् बुद्धिमान् नरः।
कुर्वन् वै लघुतामेति शक्रतुल्योऽपि भूतले॥

इत्थं तर्जिता सा गत्यन्तरमपश्यन्ती ब्राह्मणमेकमपश्यत्। अवन्दत च तं पादयोः प्रणिपत्य। स च अग्रजन्मा तां नितरां कातरां मृतामिवोपलक्ष्यमाणामालोक्य कारणमपृच्छत्। सा राज्ञा उक्तं सर्वं न्यवेदयत्। स तु तां सर्वमेतदहमभिधास्ये मा भैषीरिति समाश्वास्य अभाषत वत्से! अपि क्व राजा स्थितः, किं तत्र अभूत्, सर्वं निवेदयेति सा अवोचत् ब्रह्मन्! अश्वत्थतरुतले पिपीलिकापङ्क्तिमात्रमासीत् तत्र कियन्तं कालं राजा असौ स्थित इति।

अथ ब्राह्मणेनोक्तं विदितं राजस्मितस्य कारणं शृणु अश्वत्थवीजमतिक्षुद्रं क्षुद्राभिः पिपीलिकाभिर्वदनेनाह्रियते परमेतदेव वीजं कदाचित् गजादिभिरपि करकवलनायोग्यमहत्तरतरुरूपतया परिणमति, तद्विचित्रा विधातुः सृष्टिरिति स्मितमकरोत् राजा। सा तु एवमभिहिता द्विजेन, राजान्तिकमुपेत्य कृताञ्जलिरभाषत देव! चलद्दलवीजवदनां पिपीलिकालीमवलोक्य एतदेव वीजं कालवशात् महत्तररूपं भविष्यति इति विस्मितो विधातुरतितरां सृष्टिनैपुण्यमिति स्मितमकरोत् महाराज इति। ततश्च अतिप्रीतो नृपतिस्तस्यै सुमङ्गलायै महार्हरत्नहारं प्रसादमकरोत्।

अथैकदा सभासीनं नृपं वेत्रपाणिर्दौवारिकः समेत्य प्रणम्य च कृताञ्जलिः सकलसामन्तसम्मत्या आगतदूतदत्तसुवर्णपेटिकासमेतानेकतुरगादिवस्तुजातमादाय प्रदर्श्य राज्ञामुमतः पेटिकामुद्घाट्य तद्दाचिकं सर्वमभिधाय परावर्त्तत। ततश्च राजा मन्त्रिनासादिभिरमात्यैः सह किमस्य मूलं का वास्य शिखेति विचारयन्नपि न किञ्चिदवधारितवान्। ततश्च तद्ग्राम-

अनितासुतसुकतामाश्रित्यैव धृततत्काष्ठः स्वान्तःपुरमेव प्राविशत्। तत्र च सुमङ्गलाया एव अस्ति अस्य निगूढार्थबोधसामर्थ्यमित्यवधार्य्य तामवादीत् सुमङ्गले! ब्रूहि तावत् किमस्य काष्ठस्य मूलं का वास्य शिखेति। सा तु शिरसा प्रणम्य बद्धाञ्जलिः, देव! क्व प्रमदानामेतादृशं बुद्धिपाटवम्? यच्च मया स्मितनिमित्तमभिहितं तन्न मया स्वधिया, परं केनचित् महात्मना मन्त्ररणोद्यमदर्शनसञ्जातकरुणेन अभिहितम्। मया देवपादमूले निवेदितमित्यभाषत।

अथ राजा तदैव तं महापुरुषमन्विष्य मन्त्रागारमानीय यथार्हमर्चयित्वा अब्रवीत् ब्रह्मन्! कं देशमलङ्करोति भवान् किमाख्यश्च। द्विजः प्राह राजन्! भवन्नगरनिवासिनो मणिकारश्रेष्ठिनश्चन्दनदासस्य सविधे कृतवसतिरस्मि सुबुद्धिशर्मा नामेति। राजा अब्रवीत् द्विजवर! किमस्य काष्ठस्य मूलं का वा शिखेति भवता विचार्य्य अभिधीयतां ब्राह्मणेनोक्तं नृपते! किमत्र विचारणीयं सुकर एतस्य अवबोधः, अस्मिन् जले प्रक्षिप्ते योऽस्यांशो जले निमज्जति स एव अस्य मूलं यतः काष्ठस्य मूले एव गुरुतास्ति गुरुत्वञ्च निमज्जनकारणमिति ततश्च राजा तदीयबुद्धिसौष्ठवमवगत्य अतिप्रीतस्तस्मै प्रधानामात्यपदवीं दत्त्वा स्वामात्यकृत्ये न्ययोजयत्। अथ कालेन सुबुद्धिशर्मणः राक्षस इति अपरा आख्या सञ्जाता।

अत्रान्तरे शकटारो नाम कश्चित् सुबुद्धिशर्माणं प्रधानामात्यपदवीमारूढं निशम्य सञ्जातेर्ष्यः पर्वतेश्वरदेशसंस्थापितकटकाधिपत्यमपास्य क्लायेव राजानं सेवितुमुपचक्रमे। दैवाच्च राजा ममार। तस्मिन्नेव समये विन्ध्यारण्यसन्निधिवासी कश्चित्, क्षुविद्यो नाम जटिलः नेपालदेशान्नीलकण्ठनामोपाध्यायप्रसादासादितपरशरीरप्राणप्रवेशविद्यः सुशील-

बहुश्रुताभिधाभ्यां सतीर्थाभ्यां सह गुरुदक्षिणायै कल्पित-लक्षसुवर्णार्जनाय राजानं नन्दमेव तद्दानसमर्थं मन्यमानः कुसुमपुरमुपागमत्। अश्रौषीच्च आगत्य एव जाह्नवीतीरे कृतासनपरिग्रहो राजमरणम्। सोऽचिन्तयत् कथमिदानीं गुरुदक्षिणामाहरामि, अस्याश्च बहुत्वाद् बहुधनिसविधे याचितव्यं तथात्वेऽपि सम्यक् सिद्धिर्भवति न वा, याचनं जीवन्मरण-मेव। उक्तञ्च,

धनान्धसविधे दीनं देहि देहीति यो वदेत्।
अपमानात्मनः कालं जीवन्नेव न जीवति॥

वरं वृक्षत्वग्भिर्वसनरचनं शैलशयनं
वरं जीर्णारण्ये गलितफलमूलाशनरुचिः।
वरं मृत्युर्लोके न तु धनमदान्धस्य सविधे
स्खलद्वर्णं लज्जानतमिह मुखं याचनविधौ॥

अतो याचनमनुचितं तदिदानीं निजविद्याबलेन राज-शरीरमनुप्रविश्य सुशीलं याचकं विधाय स्वकार्यं साधयामि इति निश्चित्य अब्रवीत् भ्रातः सुशील! त्वमद्य सन्ध्यासमये राजशरीरप्रविष्टस्य मम सकाशं गत्वा गुरुदक्षिणार्थं लक्षसुव-र्णानि याचस्व, भ्रातः बहुश्रुत! त्वं मच्छरीरमिदं यत्नतो रक्षेत्याख्याय स्वसिद्धविद्याप्रभावेण प्राणानाकृष्य राजशरीर-मन्वविशत्। राजा च सद्यः सुप्तोत्थित इव व्यबुध्यत। ततश्च मन्त्रिराक्षसेन सकलनगरमहोत्सवाय प्रासादसिंहासने राजान-मुपवेश्य महामङ्गलमकारि। तस्मिंश्च काले सुशीलमागतं दृष्ट्वा राजा तं बहु सम्मान्य गुरुदक्षिणार्थं तेन प्रार्थितः तस्मै लक्षसुवर्णानि प्रादात्। एतदालोक्य मन्त्रिराक्षसेन चिन्तितं राज्ञो गतजीवितस्य सहसा पुनर्जीवनं जीवितमात्रेण च बहुसुवर्णदानं किमपि अद्भुतमिव प्रतिभाति, मन्ये केनापि

परशरीरप्रवेशविद्याविचक्षणेन स्वेष्टलाभाय आपातत इद-मनुष्ठितं परतश्च अनेन पुनः स्वशरीरपरिग्रहोऽवश्यं करिष्यते, तदा च वयं राजरहिता भवामः, अतो राजशरीरप्रविष्टस्य शरीरं कुत्रापि स्थितं विनाशनीयं येन अनेन पुनस्तत् न प्रति-पद्यते इति विचिन्त्य तत्कालमेव तुरङ्गमारूढः इतस्ततोऽन्वे-षणाय भागीरथीपरिसरेण गच्छन् कदा सुविद्यः स्वशरीरमा-श्रयेदिति चिन्ताव्याकुलं सुशीलं बहुश्रुतञ्च दृष्ट्वा अये! स एवायं जनः, यः सुवर्णलक्षाणि परिगृहीतवान् दृश्यते च सुवर्ण-लक्षप्राप्तावपि व्यग्र इव। अतोऽत्र एव किमपि आलोक-नीयमिति विविच्य अश्वादवततार ददर्श च जटिलशरीर-मेकम्। कथमेतत् शरीरमत्र पतितं तिष्ठति इति पृच्छया यदा सम्यगुत्तरं न अधिगतं तदा एतच्छरीराधिष्ठिता एव राजशरीरमनुप्रविष्ट इति निश्चित्य तच्छरीरं काष्ठादिभि-रदाहि मन्त्रिराक्षसेन। तौ च जटिलसहचरौ कदाचिदेताभ्यां कोऽप्युपायः करिष्यते इति शिलानिबद्धहृदयौ गङ्गाम्भसि निक्षिप्तौ।

अथ राजशरीरप्रविष्टो जटिलः स्वविद्याप्रभावेण शरीरं मेऽनेन मन्त्रिराक्षसेन भस्मसात् कृतमिति विदित्वा शरीर-वत्सलतया मनःक्षोभमगात्। ततश्च कियता कालेन मन्त्रि-राक्षसेन चिन्तितम्।

मयि प्रवृत्ते किमपि प्रवक्तुं चित्तं समासज्जति कौतुकेषु।
मयि स्थिते संसदि वक्रनासं सम्बोध्य सम्भाषणमातनोति॥

इति विरक्त इव लक्ष्यते राजा प्रायेणायं स्वशरीरविनाश-जनितरोष इति मन्ये अतोऽत्रेदानीमस्मदवस्थितिर्नोचिता।

यतः,

अन्तकः कुपितो यस्मिन् तदन्तं कुरुते हि सः।

राजा तु कुपितः सर्वं कुलस्यान्तं तनोत्यलम् ॥

इति विचिन्त्य सायं नगरप्रान्तस्थितदेवायतनमहोत्सव-दर्शनव्याजेन सकुटुम्बः कुसुमपुरमजहात्। ततश्च भागीरथी-मुत्तीर्य्य सन्निहितदेशाधिपतिः पर्वतेश्वर एव गुणज्ञो मामनु-ग्रहीष्यति इत्यवधार्य्य तमभ्यगात्।

अथ नीतिरीतिविज्ञानविज्ञाता शकटार एव अमा-त्यवर्य्यः राजप्रियतामगात्। एकदा राजानं मृगयारतिमालक्ष्य शकटारोऽपि तमनुसरन् मृगयाविहारेण भ्रमणमरञ्जयत्। मृगानुसरणक्रमेण राजानमतिनिविड़ारण्यप्रविष्टमश्वमारूढ़-मेकः शकटार एव अनुवव्राज तुरङ्गमाधिरूढ़ः। अपराणि सैन्यानि तमनुसर्त्तुं न अशक्नुवन्। ततश्च अमात्यः शकटारो राजनं भ्रमणाक्रान्तं क्षुत्पिपासातुरमालोक्य अश्वादवतीर्य्य स्वोत्तरीयवसनास्तृते कान्तारैकदेशे समुपवेश्य तस्य पिपासाप-नयनार्थं पानीयमानेतुमगात्। प्रापञ्च इतस्ततोऽन्विष्य जला-शयमेकम्। ततस्तत्र अवगाह्य विसिनीदलनिर्मितपुटेन पानीयमुद्धृत्य पिबन् यावत् समन्तादवीकयति स्म तावत् कामपि एकां कतिपयवर्णावलीविराजमानां शिलां जलमध्ये अपश्यत्। तत्र लिखितमस्ति एतत्

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥

तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥

ततश्च असौ व्यचिन्तयत् केन किमर्थमिदं व्यलेखि, अथवा मद्दर्शमेव अत्रालेखि विधात्रा यतोऽहमेवैतादृशोऽस्मि। यदि कदाचिद् दुर्दैववशात् मे शिलामिमां राजा स्वयं पश्येत् तन्नूनं मम प्राणसंशय एव भवेत् तत्र युक्तमिमां शिलामोहशीमेव

परित्यक्तुम् अन्यत्र वा नेतुं राजनि अत्र स्थिते। तदत्रैव एनां विपरीतां कृत्वा स्थापयामि, कदाचित् असौ राजा अति-पिपासाकुलतया अत्रैव आगमिष्यति इति तथा पद्मिनीदल-पुटेन जलं गृहीत्वा राजान्तिकमाजगाम। राजा तु तज्जलं पीत्वा अपि पिपासाशान्तिमलभमानः तामेव वापीमवा-तरत्। तत्र च शीतलसोपानप्रान्तशिलातले निहितचरणः निर्मलं पयः समन्तादवलोकयन् एकतस्तु कलुषितं नीर-मालक्ष्य कथमिदमेवं रूपमिति तर्कितमतिस्तदन्तर्जले करं प्रसारयामास। पस्पर्श च शिलामेकां सकर्दमाम्। उत्थाप्य तां जलेन चालयन् यावदवलोकयति तावत् तत्र लिखितं तदेव श्लोकद्वयमालोक्य अवाचयत्।

अत्रान्तरे मन्त्रिणा कथमद्यापि राजा चिरयति, मन्ये सा शिला अनेनाधिगता इति तर्कयता तदन्वेषणव्याजेन तत्रैव आगतम्। आगत्य च स मन्त्री तत्र तं राजानम् आकृष्टशिलालिखितश्लोकदत्तदृष्टिं तदर्थालोचनव्यग्रमनसमव-लोक्य मम एवायमनर्थ आपतित इति समचिन्तयत्।

स्वयं गते जगज्जालं गतमेव न संशयः।
स्वयं जीवति तत्सर्वं जीवतीत्येव निश्चयः॥
धर्म्मार्थकाममोक्षाणां कारणं स्वस्य जीवनम्।
तस्य सत्त्वे त्वधर्मोऽपि परिहर्तुं लघुर्भवेत्॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
आत्मत्राणतुलां यान्ति नैव विज्ञानकोटयः॥

एवं विचिन्त्य तामेव महाशिलां राजशिरसि पातया-मास। दृष्ट्वा च राजानं गतजीवितं तद्वाजिनं कस्मिं-श्चित् कान्तारे विमुच्य तस्मादतिदूरमभिगच्छन् राजान्वे-षणमिव कुर्वन् विचचार। ततश्च सैनिकेषु समागतेषु ताम्

राजवृत्तान्तं पप्रच्छ। तैश्च राजा न प्राप्त इति निगदितो दुःखितः इव तैः सह समन्तात् काननानि परिभ्रमन् दुःखाभिभूत इव नगरं प्रत्यागमत्। आगत्य च तत्र राजानमदृष्ट्वा सर्वासु दिक्षु तदन्वेषणाय लोकान् प्रास्थापयत्। पुनश्च स्वयं सैनिकैः परिवृतो राजान्वेषणार्थं काननानि पर्य्यटन् तमेवाश्वं लेभे न तु राजानम्। ततः सर्वे प्रत्याहृत्य सुदुःखिताः नगरमेव शोकाम्बुधौ न्यमज्जयन्। शकटारस्तु हा राजन्। क्वासि देहि मे प्रतिवचनमिति नितरां शोकाकुल इव उच्चैश्चक्रन्द। सर्वैश्च तदनुजीविभिः प्रतिबोधितोऽपि प्राणत्यागाय नाम मतिमकरोत्।

अथ रोदिति सावरोधे कुसुमपुरजने वक्रनासादयो मन्त्रिणो मिलित्वा तं शकटारं प्रबोध्य नव नन्दकुमारान् सान्त्वयित्वा मृतस्य राज्ञः और्द्ध्वदेहिकमकारयन्। शुभे च दिने ज्येष्ठं राजसुतं राज्ये अभ्यषेचयन्। अपरे च राजनन्दनास्तं ज्येष्ठं पितरमिव उपचेरुः। एकदा असौ नवो नृपतिः सवयोभिरुपवने विहरन् कस्यचित्तरोस्तले उपविष्टः पितृनिधनजनितचिन्तया व्याकुलितः शकटारे अनुपस्थिते वक्रनासादीन् मन्त्रिणोऽपृच्छत् आर्य्याः! पिता अस्माकं क्व गतः किं वा तस्य वृत्तं भवन्तः सविशेषं मम निवेदयन्तु इति। ततस्तैरुक्तं राजन्! एकदा देवस्य पिता अमात्यशकटारेण सह मृगयार्थं महावनमगात्। तत्र इतस्ततः परिभ्रमन्तौ तौ पार्श्वचरसैनिकवृन्दपरिभ्रष्टौ बहुदूरमीयतुः। ततः किञ्चित् कालानन्तरम् अमात्यः शकटारो न क्वापि राजा प्राप्त इति समागत्य नगरे प्रख्याप्य पुनरन्वेषणार्थं गतस्तुरङ्गममेव आनीतवान्। एतावन्तमेव वयं वृत्तान्तं जानीम इति। राजा एकदाकर्ण्य नानावित-

र्काकुलतया क्षणं तूष्णीमासीत्। ततश्च उत्थाय रहसि विचारचतुरान् विश्रम्भभाजनचारजनान् आहूय क गतस्तात: किञ्च अस्य सञ्जातमेतद् रहस्यमन्विष्यन्तु भवन्त:, अन्वेषणे सम्पन्ने भवत: सम्यक् परितोषयिष्यामि इति समाज्ञाप्य स्वयमन्त:पुरमगात्। ते तु किञ्चिदितस्ततो मृगयमाणा: अलब्धराजवृत्तान्ता: समागत्य प्रोचु: देव! किञ्चिदपि न अस्माभिर्ज्ञातं राजवृत्तान्तमिति। ततश्च राजा कुपितस्तान् भवद्भिर्येन केनापि उपायेन एतन्निगूढ़वृत्तमानेतव्यं नो चेत् युष्माकं प्राणदण्डं विधास्यामि इति भयमदर्शयत्। अथ तेऽतिभीता: स्थलेषु जलेषु च विविधोपायेन अन्वेषणमकुर्वन्। तेषु कश्चित् स्थविर: नगरोपान्तवर्त्तिन: सरसस्तीरे समासीनं कमपि तापसवेशं पथिकमद्राक्षीत्। तापसश्च तमुद्विग्नरूपं दृष्ट्वा वृत्तान्तमपृच्छत्। वृद्धेनोक्तं वयं राजाज्ञया मृगयागतस्य तत्पितुरन्वेषणार्थं नानाविधान् उपायान् चक्रम परमकृतार्था एव। अकृतार्थांश्च अस्मान् समागतानसौ प्राणदण्डेन योजयिष्यति इति।

तदाकर्ण्य स तापसस्तं स्थविरमब्रवीत् तात! समाश्वसिहि गच्छ सत्वरं राजानं निवेदय, अस्ति कश्चित्तापस एतद्वृत्तान्तप्रणिधाननिपुण इति तदाकर्ण्य तेन वृद्धेन हर्षोत्फुल्लचित्तेन सत्वरं राजसदनमभ्येत्य राजाभिदधे देव! अद्य दिवसावसानसमये मया कश्चित् तापसो दृष्ट:। स तु मामलब्धराजवृत्तान्तं विषादपूर्णमालोक्य कृपया श्रुतसर्ववृत्तान्त: नय मां राजसन्निधिम् अहमेतद्वृत्तान्तवर्णने शक्त इत्याचष्ट। तच्छ्रुत्वा अहं सत्वरमेव देवपादमूलमागत:, परं देव: प्रमाणमिति ततश्च राज्ञा शीघ्रमानय तं तापसमित्युक्ते तेन अविलम्बितमेव आनीत: स तापस: राजसमीपमगच्छत्। तमागत-

मभिप्रणम्य समुचितासने समुपवेश्य भगवन्! तातवृत्तान्त-नितान्तचिन्ताकुलतया अनया प्रभूतया राज्यश्रिया अपि निमेषमात्रमपि न विश्रान्तिसुखं प्राप्नोमि, कं शरणं यामि इदानीमिति चिन्तयन्नेव चिन्तामणिमिव भवन्तं समासादित-वानस्मि इत्यवसितवचने एव नरपतौ स तापसः स्वसमीहितं सिद्धमेव अवेहि परश्वः सर्वमावेदयिष्यामि इत्यभिधाय सर-स्तटमगात् राजा च अन्तःपुरम्।

अथ तापसः केनापि उपायेन अयमर्थः शीघ्रं निर्णेय इति चिन्तयन् वीरसाधनं सस्मार। बद्धपरिकरश्च प्रातरुत्थाय तं स्थविरं तदुपयोगिद्रव्यासादने न्ययोजयत्। स्वयञ्च श्मशाने शूलारोपितं पुरुषमेकं संगृह्य सायं गङ्गाजलेन संस्नाप्य चिता-मेकामासिच्य तत्र कृताञ्जनं विहितसिन्दूरतिलकं रक्तचन्दन-चर्चितं रक्तकरवीरदामनिबद्धप्रत्यङ्गं सताम्बूलवदनम् उत्तानं संस्थाप्य चरणयोर्हस्तयोः शिखायाञ्च तत्तन्मन्त्रैः पञ्चभिः कीलकैः कीलयित्वा मत्स्यमांसाद्यनेकबलिपूजोपकरणान्यासाद्य विस्रंसितचिकुरभारो वामकरकलितनरकपालमालः कृत-सिन्दूरतिलकः रक्तचन्दनकृतानुलेपनो रक्तपुष्पमालाविराजित-कण्ठनालः करतलकलितललितकरवालस्ताम्बूलवदनः साञ्जन-नयनो विश्वासाच्छवहृदयबद्धवीरासनो दिग्बन्धात्मरक्षा-दिकं विधाय विगतभीर्दिक्षु विदिक्षु च क्षेत्रपालादिभ्यो बलीन् विकीर्य्य तिरस्करिणीं नमस्कृत्य महाकालीं ध्यात्वा निशीथे मन्त्रमजपत्। ततश्च अनेकसिद्धिविध्वंसि घोरनाना-रूपभूतप्रेतपिशाचादीन् तत्तद्बलिभिस्तत्तद्विद्याप्रभावैश्च निराकुर्वन् मन्त्रवर्णावलीपाठपरः सहसा यामिनीचरमयामे प्रचण्डमार्त्तण्डमण्डलमिव प्रबलवह्लकालानलमिव तेजो-राशिमपश्यत्। ततश्च देवीपादपद्मनिबद्धचेतस्तया अवि-

चलितमतिः क्षणेन भ्रमद्भ्रमरमन्दारदामनिबद्धकुटिलकुन्तलः बहुलरत्नराजिविराजितानेकरविसम्भारभासुरकुण्डलां गृहीतदिव्यताम्बूलरागप्रतिफलनद्विगुणितरक्तिमारञ्जितगण्ड-मण्डलां बालातपविडम्बिसिन्दूरसाररलिततिलकां सस्मितवदनचन्द्रां देवीं भद्रकालीं ददर्श। दृष्ट्वा दण्डवत् प्रणम्य च तेन संस्तुता सा वत्स! परितुष्टाऽस्मि वरं वृणीष्व इति तमवादीत्। ततस्तेन मातर्भूपतेर्नन्दस्य किं वृत्तम् आचक्ष्व इति वरं प्रार्थिता महादेवी समभाषत भद्र! अस्ति अत्र नगरोपान्तवर्त्ती पातालकन्दरो नाम महीधरः। तस्य दरीपरिसरे वटविटपिसविधवर्त्तिन्या वाप्या जलान्तर्निहितशिलातलोल्लिखितश्लोकद्वयाभिप्रायदत्तचित्तो महीपतिरमात्यशकटारेण महाशिलानिपातनेन व्यापादितस्तत्रैव अद्यापि तदीयसर्वाङ्गीणाभरणानि अस्थीनि च सन्ति इत्यभिधाय सद्यस्तिरोदधे। अथ स तपस्वी तेन वृद्धेन सह सद्य एव राजसदनमयासीत् अब्रवीच्च तं राजानं देव! विदितं सर्वं देव्याः कृपया, परं न शक्नोमि निवेदयितुं यतः स्वायत्तसिद्धयः परायत्तसिद्धयः उभयायत्तसिद्धयश्च राजानो भवन्ति तेषु भवान् परायत्तसिद्धिरेवासि अयञ्च वृत्तान्तः सर्वोऽपि तं परमेव अनुभावतीति ततश्च राज्ञा स्वायत्तसिद्धिरेव अस्मि इति निःसन्देहमवगच्छ इत्यभिहितः स तापसः सर्वं देव्युक्तं न्यवेदयत्। तदाकर्ण्य राजा अतिचमत्कृतः स्वाभरणानि रत्नानि च बहूनि तस्मै पुरस्कृत्य तं तापसं वृद्धसहितं शिलामाभरणादिकञ्च आनेतुं प्राहिणोत् तौ च परेद्युर्देव्युक्तवर्त्मना गत्वा तत्सर्वमादाय राज्ञे समर्प्य स्वावासमगच्छताम्। ततो नृपतिस्तान्येव आभरणानि इति कञ्चुकिवदनाद्विज्ञाय शिलातलोल्लिखितश्लोकद्वयार्थमवधार्य पितुश्चोभयायत्तसिद्धित्वमवगम्य अमात्यशकटारेणैव इदमनुष्ठितमिति जानन् शिल...

वक्रनासादीनाहूय सर्वं तद्वृत्तान्तमाख्याय शकटारं हन्तुमादिशत्। ततोऽमात्यशकटारमाहूय तस्मै सर्वं तत्कृतमाख्याय कालकायनामानं भृत्यमाहूय आज्ञापयत् कालकाय! अतिगह्वनमेकं भूगृहं विधाय सपुत्रकलत्रमेनं दुरात्मानं तस्मिन् निक्षिप्य अष्टाङ्गुलमितेन, तद्द्वारेण पलपञ्चकमितान् पुराणचणकान् तन्मितञ्च जलं प्रत्यहं दातव्यं यथा च तत्र न कोऽपि गच्छेत् तथा विधातव्यञ्च इति। कालकायश्च तथैव तत् सर्वमन्वतिष्ठत्।

अथ राजा वक्रनासादिभिरेव राजकार्य्याणि अपश्यत्। शकटारस्तु तथाविधबन्धनागारनिक्षिप्तः नितरां दुःखितः सङ्कटवर्मनिकटवर्मसुमतिमित्रगुप्तप्रकटारविकटाराख्यान् षट्पुत्रानभाषत पुत्राः, समुत्पन्ने ईदृशे व्यसने स्फुरति कश्चिदुपायो येन प्रतिविधानं कर्त्तुं शक्यते? ततस्तेषु कतिपयनिमेषश्वासवतामस्माकं न स्फुरति कोऽपि उपायलेशः, किञ्च तथाविधकृतातिपातकानां युक्तैव एतादृशी गतिरिति वदत्सु विकटारः समुत्पन्नमतिः सक्रोधश्च अब्रवीत् भ्रातरः! आत्मत्राणपरायणेन तातेन तादृशमकार्य्यमपि कृतं परं तत्तनयो राज्यप्रदानपरिपोषणादिना वर्द्धित इति कथं पातकिनो वयं किञ्च कृतघ्नेन अमुना निरपराधा वयमपि नीयन्तेऽन्तकसदनं तदत्र स्वस्वबुद्धिविभवेन प्रतिविधानं भावनीयमेव इति। ततः शकटारो विकटारमेव प्रतिविधानक्षमं विज्ञाय तान् चणकान् तज्जलञ्च तज्जीवनाय एव प्रकल्प्य स्वयं स्वपुत्रकलत्रः क्रमेण प्राणान् जहौ। विकटारस्तु राजापकारचिन्तनावगणितशोकः कथञ्चित् तावन्मात्रवृत्तिः कालमत्यवाहयत्।

एकदा राजा का गतिरिदानीं शकटारस्य इति कालकायमपृच्छत्। तेन च कालकायेन देव! तावन्मात्राशनकास्तज्जलञ्च मया तेन रन्ध्रेण दीयते इति एतावन्मात्रं ज्ञायते

नान्यदिति निवेदितम्। ततो नृपतिर्भूगर्भगृहद्वारमुद्घाट्य कोऽत्र जीवतीत्यवधार्य्यतामिति समादिष्टः कालकायः सर्वाणि मृतकास्थीनि इतस्ततो दृष्ट्वा अस्थिचर्मावशेषं विकटारञ्च देव! सर्व एव मृताः परमेकोऽस्थिचर्मशेषो हृतनिमेषः निश्वासोपलब्धजीवनो बालस्तिष्ठतीति न्यवेदयत्। तदाकर्ण्य राजा सञ्जातकृपस्तं बालकमानाय्य बन्धनात्, जीवनमात्रमन्नं तदर्थमाज्ञापयत्। स च तेनैव अन्नेन स्वगृहे स्थितः कालं निनाय।

अत्रान्तरे मन्त्रिराक्षसो व्यचिन्तयत्—

किं देशान्तरलब्धवैभवचयैः सर्वाधिकैः सर्वदा
यत्रात्यन्तिकबान्धमित्रसुहृदां दृष्टिर्न सञ्जायते।
किं वाऽनेन महत्तरेण महसा तत्राधिकारेण वा
यत्र द्वेषिजनस्य कापि निकृतिः कर्त्तुं न वा शक्यते॥

भिक्षाटनादिक्लेशविशेषकृशतरदेहदाहजनितबद्धवैरः सकलसम्पत्तिभोगयोग्यराजशरीरसंवासस्थापनारूपोपकारानभिज्ञो राजा तन्मतवर्त्ती शकटारञ्च निधनमगात् तत्तनयश्च उदग्रधन्वा नन्दः सर्वामपि महीं स्ववशां कर्त्तुकामः सदृशरूपममात्यं मृगयते। तदस्मात् निष्क्रम्य सकलसुहृद्वरशिरोमणिचन्दनदासशकटदासाद्यधिष्ठितं कुसुमपुरमेव समाश्रयणीयमिति विविच्य पर्वतेश्वरमनुमान्य कुसुमपुरमगात्। ततश्च नन्देन अमात्यराक्षसमागतं विज्ञाय पैतृकोऽयममात्यवर्य्य इति तं प्रधानामात्यपदवीमध्यारोहयत्। स च यथोचितं सर्वं राजकार्य्यमकरोत्। विकटारस्तु तादृशं महाप्रभावशालिनं मन्त्रिराक्षसमेव भृशमुपचचार। तदुपचारेण अतिप्रीतो राक्षसस्तस्मै पारितोषिकं किञ्चित् दातुमैच्छत्। स च अमात्य! नाहं पारितोषिकार्थी, राजसंसारे सर्वमेव त्वदधीनं तदहमेकमधिकारं

लब्धुमिच्छामि इति व्यज्ञापयत्। अमात्यराक्षसश्च तस्मै एक-मधिकारं दास्ये इति प्रतिशुश्राव।

एकदा राज्ञः पितृश्राद्धदिनमागतं दृष्ट्वा मन्त्रिराक्षसस्तं श्राद्धभोक्तृब्राह्मणनिमन्त्रणार्थं न्ययोजयत्। विकटारस्तु तथेति मन्त्रिण आदेशं शिरसा आदाय समयोऽयमस्मत्प्रति-हिंसाया इत्यवधार्य्य तुरगाधिरूढः समन्तात् तादृशं विप्र-मन्विष्यन् प्रान्तरदेशे दीर्घदष्टुनिहततेजसम् अशीतिवर्षदेशीयं करालकुटिलविरलदशनं भ्रूकुटिकेशनिषेवितपिङ्गलनयनं प्रहृद्ध-श्मश्रुविकटवदनं पिङ्गलोद्धकेशं कुत्सितवेशमतिकुत्सितरूपं कुशोन्मूलनाय तन्मूलेषु माक्षिकप्रक्षेपणव्यग्रकरं कमपि तापस-मद्राक्षीत्। दृष्ट्वा च तं प्रायेणायं महोत्तरोद्योगभागिव लक्ष्यते इत्यवधार्य्य तुरङ्गादवरुह्य प्रणम्य कृताञ्जलिरभाषत भगवन्! के यूयं किमभिधानं श्रीमतां, कथञ्च एतस्मिन् कान्तारदेशे तीक्ष्णसन्तापवति मध्याह्नसमये किमिदमनु-ष्ठीयते, यदि न रहस्यं श्रोतुमिच्छामि। तदाकर्ण्य स तापसः किमनेन कार्य्यप्रतिबन्धिना आलापेनेति वदन् अपि पुनःपुनः तेनोपरुध्यमानः करेण कुशोन्मूलनं कुर्वन् एव अब्रवीत् ब्राह्मणोऽहं विष्णुगुप्तो नाम शिवगुप्ततनयः, एकदा मे तातः स्नातुं भागीरथीतीरं गच्छन् कुशाङ्कुरविद्धचरणस्तज्जनित-क्षतवेदनया एव परलोकमगात्। अत इमे कुशा मच्छत्रव एवेति एतान् उन्मूलयितुं एतन्मूलेषु माक्षिकं प्रक्षिपामि येन तदाकृष्टाभिः पिपीलिकाभिरेतन्मूलपर्य्यन्तध्वंसः कर्त्तव्यः इत्थं क्रमेणाखिलां महीं निष्कुशां करिष्यामि इति सङ्कल्प-वशादेतदनुष्ठीयत इति। विकटारस्तदाकर्ण्य यदि अनेन सह कथमपि राज्ञो विरोधः स्यात् तदा अनेन राजा समूल-मुन्मूलनीय एव, सम्भाव्यते च एतादृशेन कुरूपेण दृष्टेन

एव राज्ञः कोपः। कुपितश्चेनं यथोचितमवमंस्यते तर्हि मम इष्टसिद्धिरवश्यम्भाविनी इति निश्चित्य तमवोचत् ब्रह्मन्! भविता किल श्वः कुसुमपुराधिराजस्य नन्दस्य पैतृकं कृत्यं तद् भवन्तमहं निमन्त्रयामि तत्र भोक्तुम्। अथ तापसः तादृशनिमन्त्रणप्रत्याख्यानमनुचितं मन्वानः किमिदमस्मत्-कार्य्यविघ्नमुत्पादयसि इति विरक्त इव भवतु श्राद्धसमय एव अहं गमिष्यामि, न पूर्वं न वा गमनात् परं क्षणविलम्बमपि सहिष्ये इत्याख्याय विरराम। विकटारस्तु तथेति तं प्रणम्य प्रजविततुरगः कुसुमपुरमगात्। न्यवेदयच्च मन्त्रिराक्षसाय ब्राह्मणो निमन्त्रित इति।

ततश्च निर्द्धारिते दिवसे मध्याह्नसमये सुसज्जितश्राद्ध-वेलायां समागतं विष्णुगुप्तं योग्यासने समुपवेश्य विकटारः परावर्त्तत। राजा तु अन्तःपुरात् कृतनित्यक्रियः समागत्य श्राद्धमण्डपं सहसा तथाविधं विकटाकारं ब्राह्मणं श्राद्धभोक्तु-रासने समुपविष्टमालोक्य सञ्जातरोषः नास्ति किं क्षितितले कश्चित् ब्राह्मणः, येन ईदृशोऽत्रानीतः, अपसार्य्यतामेषः विरूपः नाहमेनं श्राद्धभोक्तारं कर्त्तुमिच्छामि इति उच्चैरभाषत। तदाकर्ण्य विष्णुगुप्तः प्रलयकाल इव क्रोधप्रज्वलितः सहसा आसनादुत्थाय भूमौ पादमाहत्य धिङ्मूर्ख राजापसद! न जानासि माम् अनुभव इदानीमविनयस्य फलम्। शृण्वन्तु सर्वे।

मध्येऽस्मिन्निलये हि सर्वविदुषां मूर्द्धाभिषिक्तस्य मे
यत्रासीदवमानना तदधुना स्तोमं कुशानामिव।
यावन्नन्दकुलं कलङ्कमलिनं नोन्मूलये मूलत-
स्तावच्छ्रीशिवगुप्तलालिततनुर्बध्नामि नाहं शिखाम्॥

इत्यभिधाय अस्ति कश्चिदत्र य एतत्प्राज्यराज्यकामः स-मायातु मया सहेति वदन् राजसदनादुपावर्त्तत। तस्मिंश्च

अधिकरिष्यति ? तत् तथा यतस्व,—यथा न चिरम् इयं क्लेशयति अस्मान् कुमारदर्शनोत्कण्ठा' इति।

अथ प्रभाते प्रभूतानि प्रतिप्राभृतानि प्रधानप्रतिदूताधिष्ठितानि दत्त्वा हंसवेगं व्यसर्ज्जयत्। स्वयमपि तत आरभ्य अविरतैः प्रयाणैः अभ्यमित्रम् अयासीत्।

प्रयांश्च कियन्तम् अध्वानं राज्यवर्द्धनभुजोपार्ज्जितम् अशेषं मालवराजसैनिकम् आदाय समागच्छन्तं भण्डिं शुश्राव। तत्र च अभिनवेन पुनः भ्रातृशोकस्मरणेन सम्पीड्यमानहृदयस्य शिविरं प्रविशतः सहसा भण्डिरागत्य अधोमुखो मुक्तकण्ठं रुदन् पादयोः पपात। राजा च सुचिरम् अतिकरुणं प्रारोदीत्। अथ कथञ्चिदिव प्रशान्ते मन्युवेगे देवो हर्षः क्षणं स्थित्वा भ्रातृमरणवृत्तान्तम् अपृच्छत्; अब्रवीच्च यथावृत्तं भण्डिः। अथ राजा पुनः अकथयत्,—'राज्यश्रीवृत्तमाख्याहि'। सोऽवदत्, 'देव! देवभूयं गते राज्यवर्द्धने, गुप्तनाम्ना च गृहीते कुशस्थले, राज्यश्रीः परिभ्रश्य बन्धनात् विन्ध्याटवीं सपरिजना प्रविष्टेति लोकमुखात् श्रुता वार्त्ता। अन्वेषणायञ्च तस्याः प्रहिताः कतिपये जना नाद्यापि निवर्त्तन्ते' इति। तदाकर्ण्य राजा अवादीत्,—'यत्र सा, तत्र अहमपि गमिष्यामि। भवान् कटकम् आदाय प्रवर्त्ततां गौड़ाभिमुखम्'।

अथ अन्येद्युः स्वसारम् अन्वेष्टुं हयसाधनैः कतिपयैः प्रातिष्ठत विन्ध्याचलम्; प्रापच्च कतिपयैः एव अहोभिः तम्। प्रविशंश्च दूरतो वनग्रामम् अद्राक्षीत्, प्राविक्षच्च तत्रैव इति।

---

## अष्टम उच्छ्वासः।

अथ अन्येद्युः देवो हर्षः तस्मात् वनग्रामात् निर्गत्य विन्ध्या-

टवीम् अविशत्; पर्य्यटच्च तत्र समन्तात् बहून् दिवसान्। कदाचित् परिभ्रमतः तस्य भूपतेः व्याघ्रकेतुः नाम कश्चित् आटविकसामन्तस्य शरभकेतोः सूनुः कुतोऽपि शबरयुवानम् एकम् आदाय सन्निकर्षम् आगच्छत्, व्यज्ञापयच्च,—'देव! एतस्य खलु विन्ध्यस्य स्वामी शबरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा स्वस्त्रीयः सर्व्वस्य अस्य विन्ध्यारण्यस्य पर्णानामपि अभिज्ञः, किमुत तत्तत्प्रदेशानाम्' इति। नृपतिः तम् अपृच्छत्,—'भद्र! काचित् रूपवती नारी दर्शनपथम् आगता तव?' इति। स प्रत्यवोचत्,—"न एवंरूपा काऽपि दृष्टिपथं गता, इदानीं तावत् देवाऽऽदेशात् अन्वेष्टुं यतिष्ये। इतश्च न अतिदूरे दिवाकरमित्राऽऽख्यः कोऽपि पाराशरी गिरिनदीम् आश्रित्य प्रतिवसति, स यदि विन्देत वार्त्ताम्' इति। तत् आकर्ण्य राजा चिन्तयामास,—'श्रूयते,—स्वर्गतस्य ग्रहवर्म्मणः शैशवमित्रं दिवाकरमित्रो नाम युवा एव सौगतधर्म्मम् आश्रित्य काषायपरिवीतो व्यचारीत्' इति। प्रकाशम् अवादीत्, 'भद्र! उपदिश्यतां तन्निवासस्थानं, यत्रासौ प्रतिवसति'।

अथ नरपतिः तेन निर्घातेन सह गत्वा तरुषण्डमध्यवर्त्तिनं दिवाकरमित्रं दृष्ट्वा, शिरसा मनसा वाचा च वन्दित्वा व्यजिज्ञपत्,—'भगवन्! मम हि विनष्टनिखिलप्रियजनस्य जीवितनिबन्धनं एकैव यवीयसी भगिनी अवशिष्टा। साऽपि भर्त्तृवियोगात् वैरिपरिभवम् असहमाना विन्ध्याटवीम् अविशत् इति वार्त्ता। ताञ्च अन्वेष्टुं वयम् अविरतम् इमाम् अटवीं पर्य्यटामः, न च एषा अधिगम्यते। तत्कथयतु गुरुदेवः, यदि कदाचित् वनं पर्य्यटता दृष्टिपथं गता सा भवतः श्रुतिपथं वा' इति।

तत् आकर्ण्य जातानुकम्पः पाराशरी समभ्यधात्,—'भद्र! न अधिगतः कश्चिद् वृत्तान्त एवंरूपः' इति ब्रुवति एव तस्मिन्,

कश्चिज्जातकरुण इव भिक्षुः ससम्भ्रमम् आगत्य उपरचिताञ्जलिः समभाषत,—'भगवन् भदन्त ! महत् खलु करुणं वर्त्तते, परित्रायस्व,—बाला काचित् बलवद्व्यसनाभिभूता इव दृश्यमाना कल्याणरूपा वैश्वानरं प्रवेष्टुम् उद्यता' इति। तत् आकर्ण्य राजा सञ्जातानुजाशङ्कः प्राह,—'भद्र ! कियद्दूरे सा ?—कथं वा आर्य्यस्य दृष्टिपथं गता ?' इति।

तथाऽभिहितोऽसौ भिक्षुः प्राब्रवीत्,—"महाभाग ! श्रूयताम्,—अहम् अद्य प्रत्यूष एव यदृच्छया गतवान् अतिदूरम्। गत्वा च एकस्मिन् वनलतागहने नारीणां रुदितम् अशृणवम् ; सञ्जातकृपश्च तम् उद्देशं गतोऽस्मि ; दृष्टवान् च अस्मि परं कारणं करुणायाः योषितमेकाम् ; अचिन्तयञ्च 'चित्रमिदम् !! ईदृशीमपि आकृतिम् अभिभवति दारुणः सन्तापः !!' इति। सन्निहितञ्च मां काऽपि अन्यतरा योषित् तस्मात् स्त्रैणादुत्थाय समब्रवीत्,—'भगवन् ! सर्व्वभूतानुकम्पनपरा प्रायेण प्रव्रज्या श्रूयते ; तत् इयं नः स्वामिनी पितुः अवमानेन, भर्त्तुः वियोगेन, भ्रातुः अकालमृत्युना, शेषस्य बान्धववर्गस्य भ्रंशेन च सबाष्पनयनं भृत्यवर्गं विहाय अग्निं प्रविशति ; परित्रातुम् अर्हति'। अहन्तु तत् आकर्ण्य समुद्विग्नतरः शनैः अवदम्,—'आर्य्ये ! यथा कथ्यते, तथा, शक्यते चेत् मुहूर्त्तमात्रमपि त्रातुं, तदा न व्यर्थेयं प्रार्थना भविष्यति। मम आचार्य्यः सन्निहित एव। तदन्तिकम् अस्मिन् वृत्तान्ते कथिते, अवश्यमेव असौ समागत्य प्रतिविधास्यति। सुकौशलेन कुशलशीलामिमां कियन्तं कालं प्रबोध्य रक्षतु भवती, अहम् अविलम्बेनैव गत्वा व्यतिकरम् इमं गुरवे निवेदयिष्यामि' इत्युक्त्वा भवदन्तिकम् उपागाम"।

तदाकर्ण्य राजा श्रमणाऽऽचार्य्यमब्रवीत्,—'भगवन्! नियतं सा एव इयम् अनार्य्यस्य अस्य हतभाग्यस्य स्वसा इति विदोर्य्य-

मामेव इदं हतहृदयम् आवेदयति, तत् सत्वरं परित्रायताम्' इत्युक्त्वा तमपि भिक्षुम् अब्रवीत्,—'आर्य्य! दर्शय पन्थानं, क्व असौ? तत्र गच्छामः,—यदि कथमपि जीवितां पश्यामः'।

अथ सर्व्वे ते गतवन्तः तम् उद्देशम्; दृष्टवन्तश्च वैश्वानरप्रवेशोद्यतां राज्यश्रियम्। अथ भ्राता हर्षस्तां ससम्भ्रमम् अग्निसान्निध्यात् आक्षिप्य तरुतलम् आनीतवान्। दृष्ट्वा च भ्रातरं सुचिरमतिकरुणं विललाप सा। परिजनैश्च महता प्रयत्नेन प्रबोध्यमाना कथङ्कथमपि निवर्त्तितवती। ततः स्वमारं शनैः अब्रवीत् राजा,—'वत्से! वन्दस्व भगवन्तं श्रमणाऽऽचार्य्यम, एष ते भर्त्तृहृदय द्वितीयं, गुरुश्च अस्माकम्' इति। ततश्च भ्रातृवचनात् पतिवार्त्ताऽऽकर्णनप्रसङ्गेन पुनरपि अश्रुपूर्णलोचनायां राज्यश्रियां नमन्त्यां आचार्य्यः दीर्घं निश्वसन् सुहृच्छोकेन, क्षणं स्थित्वा मधुरया वाचा समभ्यधात्,—'वत्से! अलमतिरुदितेन' इति राज्यश्रियमुक्त्वा राजानं पुनरवादीत्,—'वत्स! गम्यतां पुनः मदीया आवासभूमिः' इति।

ततो राजा सपरिजनां भगिनीमादाय तमेव देशं गत्वा आबन्धनात् पावकप्रवेशोद्योगपर्य्यन्तं सर्व्वं वृत्तान्तं स्वसुः परिजनात् शुश्राव। तथा श्रवणकातरञ्च तं देवं हर्षं श्रमणाऽऽचार्य्यः सान्त्वयन् प्रोवाच,—'श्रीमन्! श्रूयतां तावत्, वक्तव्यमस्ति किञ्चित्,—एकदा नागार्ज्जुनेन नाम भिक्षुणा नागराजात् अद्भुतप्रभाभासिना विषसन्तापशमनी मन्दाकिनी नाम एकावली लेभे। स च शातवाहनाभिधानाय राज्ञे सख्ये तां दत्तवान्। सा च इयं कालेन शिष्यपरम्परया अस्माकं हस्तं प्राप्ता। यदि च परिभव इव भवादृशां दानम उपचारः, तथाऽपि औषधिबुद्ध्या धीमता सर्व्वसत्त्वरक्षाप्रवृत्तेन विषसन्तापात् रक्षितुकामेन गृह्यताम्' इत्युक्त्वा तां मन्दाकिनीं

राज्ञे प्रादात्। राजा च तां प्रभूतैः मयूखैः भासमानां सर्व्वाऽऽशापूरणीं दृष्ट्वा सादरम् अग्रहीत्। गते च एकावली-प्रसङ्गे प्राप्तविश्रम्भा राज्यश्रीः ताम्बूलकरङ्कवाहिण्या पत्रलेखया हर्षं विज्ञापयामास,—'काषायग्रहणानुज्ञया अनुकम्पयतामियम् अपुण्यभाजनं ते भगिनी' इति। राजा तु तदाकर्ण्य किमपि नाभ्यधात्। अथ आचार्य्यैः विविधैः प्रबोधवचनैः सान्त्वयामास ताम्। ततश्च भूपतिः सविनयम् आबभाषे श्रमणाऽऽचार्य्यम्,—'प्रार्थनाऽस्ति काचित् विधेयस्यास्य,—इयमस्माकं भगिनी सर्व्वकार्य्योपरोधेनापि पालनीया नित्यम्; अतः अद्यावधि यावदहं लघयामि प्रतिज्ञाभारं, तावदिमाम् अत्रभवतः धर्म्याभिः कथाभिः अस्मत्पार्श्ववर्त्तिनीमेव प्रतिबोध्यमानामिच्छामि। इयं पुनः अवसितकृत्येन मयैव समं ग्रहीष्यति काषायाणि' इति उक्त्वा तूष्णीम्बभूव भूपतिः। अथ आचार्य्ये तस्मिन् 'तथा' इति अभिनन्दितप्रणये प्रीयमाणः राजा तत्र तां रजनीम् अतिवाह्य, प्रभाते वसनालङ्कारादिभिः परितोष्य विसर्ज्य च निर्घातम् आचार्य्येण सह स्वसारम् आदाय कटकम् अनुजाह्नविनिविष्टं प्रत्यागमत्।

---

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितं

सङ्क्षिप्तश्रीहर्षचरितं समाप्तम्।

---

# कादम्बरीकथासङ्ग्रहः ।

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
कादम्बरीकथासारः क्रियते छात्रबोधकः ॥

अस्ति विदिशानाम्नी नगरी । तस्यामासीत् शूद्रको नाम नरपतिः । एकदा काऽपि मतङ्गदारिका तस्मै वैशम्पायननामानं कमपि गुणवन्तं शुकमुपाहरत् । स च शुकः दक्षिणं चरणमुद्धृत्य जयशब्दपूर्व्वम् ;—

"स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥"

इत्यार्य्यया नृपस्य लोकोत्तरं प्रतापमाख्यत् । राजा तं गुणसागरमालोक्य कौतुकात्—"कस्त्वम् ?—क्व ते जन्म ?—कः पिता ?—का च माता ?—कथं शास्त्राणामधिगमः ?—किं जन्मान्तरानुस्मृतिः, उत वरप्रभावः ?—कथं पञ्जरबन्धः ?—कुत आगतम् ?" इति पृष्टश्च सः निखिलमात्मवृत्तान्तमवर्णयत्,—"देव ! विन्ध्यारण्ये पम्पासरसस्तीरे मम जन्म, मां प्रसूयैव जननी मे प्रसववेदनया परलोकं गता, विवर्द्धितश्चाहं पित्रा न्यवसम । कदाचित् कोऽपि मृगयुः तमुद्देशमागत्य बहुभिः शुकैः सह तातं निजघान ; अहन्तु दैवात् ततो मुक्तः पथि लुण्ठन् मुनिना हारीतेन तेनैव पथा गच्छताऽऽश्रमं नीतः । तस्य पिता जावालिर्नाम महातपाः मामवलोक्य सन्निहितान् मुनीन् अवदत्,—'स्वकृतस्याविनयस्य फलमनेन भुज्यते' । श्रुत्वा च तद्वचनं सर्व्वे मुनयः मद्वृत्तान्तश्रवणकुतूहलिनः—'कोऽयम् ?—

कीदृशो वा अविनयः कृतोऽनेन?' इत्यादि सविनयं तं पप्रच्छुः। मुनिरप्याह, शृणुत,—

'आसीत् तारापीड़ो नाम नृपतिरवन्त्याम्। तस्य पत्नी विलासवती नाम पुत्रार्थं बहूनि व्रतानि अकरोत्; तुष्टाश्च देवास्तेन। अथैकदा राजा प्रभातप्रायायां रजन्यां महिष्या वक्त्रे प्रविशन्तमिन्दुं दृष्ट्वा, स्वप्नोत्थितः स्वं मन्त्रिणं शुकनाममाहूय तं सर्व्वं स्वप्नवृत्तान्तं कथयामास। तदाकर्ण्य मन्त्री प्रोवाच,—'राजन्! द्वितीयमिव चन्द्रं पुत्रं लप्स्यसे। मया च अद्य स्वप्ने दृष्टं,—मम मनोरमाया भार्य्याया अङ्के पुण्डरीकमापतितम्' इति।

अथ गच्छता कालेन राज्ञी कुमारमप्रतिमरूपमसूत, मनोरमा च तथैव सुपुत्रम्। राजा 'चन्द्रः महिष्या वदने प्रविष्टः' इति स्वप्नानुसारेणैव पुत्रं 'चन्द्रापीड़ः' इति नाम्ना चकार। मन्त्री तु पुत्रस्य 'वैशम्पायनः' इति नाम ददौ। चन्द्रापीड़वैशम्पायनयोराजन्म तथा सौहृदमवर्द्धत,—यथा क्षणमपि परस्परवियोगं न सेहे परस्परम्। स च राजतनयस्तेन मन्त्रिपुत्रेण सह शैशव एव सर्व्वासु कलासु पारं जगाम। कालेनोपारूढ़यौवनश्च पितृदत्तैः बहुभीरत्नजातैरिन्द्रायुधाख्येन चाश्ववरेण भृशं मोदमगमत्। अत्रान्तरे जनन्या प्रहितां पत्रलेखाऽऽख्यां कामपि ताम्बूलकरङ्कवाहिनीं लब्ध्वा, तस्यां परां प्रीतिमधत्त। अथ राजा पुत्रं तथाविधं विनीतं प्रकृतसुभगं प्रकृतिरञ्जनञ्च विदित्वा, स्वभुजादवरोप्य राज्यभारं स्वयं निर्वृतिं लिप्सुः यौवराज्येऽभिषिषेच।

कियता कालेन स युवराजः बहुभिः सामन्तराजैः वैशम्पायनेन चानुगम्यमानो दिशो जेतुं प्रस्थितः, प्राक् प्राचीं, ततो याम्यां, ततश्च प्रतीचीं, समनन्तरञ्च कौबेरीं

विजिग्ये। अथोत्तरस्यां कैलाससन्निधिचराणां हेमजटनाम्नां किरातानां सुवर्णपुराऽऽख्यं जनपदं नातिदूरवर्त्तिनं पूर्व्वसागरस्य जित्वा, तत्रैव कृतशिविरसन्निवेशः मृगयां चरन्, एकदा किन्नरमिथुनमपश्यत्, अन्वधावच्च तज्जिघृक्षुः प्रजविना तुरगेण। क्रमेण हस्तप्राप्तमिव तत् सुदूरं नीत्वा राजपुत्रं तिरोबभूव। इत्थं महावेगिना इन्द्राऽऽयुधेन मुहूर्त्तादेव पञ्चदशयोजनमध्वानं जगाम राजतनयः। अध्वश्रमार्त्तश्च राजपुत्रस्तत इतः सलिलमन्विष्यन्, अच्छोदं नाम सरः सम्प्राप्य दर्शनेनैवापगतक्लमः तत्सलिलममृतस्वादु पीत्वा, कियन्तं कालं तत्तीरे विश्रान्तः, उत्तरेण दिव्यं सङ्गीतस्वरमाकर्ण्य, तत्प्रभवं जिज्ञासुस्तदनुसरन् पुरतः भगवतः पिनाकिनः शून्यं सिद्धायतनं रम्यमपश्यत्। तत्र च गत्वा भगवन्तं चन्द्रशेखरं भक्त्या प्रणम्य, तत्र स्थितां भगवद्गुणान् गायन्तीं कामपि दिव्ययोषितं ज्योत्स्नाधवलकान्तिमष्टादशवर्षदेशीयामवलोकयामास; विसिस्मिये च तद्रूपसम्पदा हारिणा गीतेन च। अथ तत्र स्थितं सा दिव्याङ्गना अवसितसङ्गीता भगवन्तं देवं प्रदक्षिणीकृत्य प्रणम्य च, तस्मिन्नभ्यागते सुधास्निग्धां दृष्टिमपातयत्; अवोचच्च मधुवर्षिण्या वाचा,—"स्वागतमतिथये? आश्रममेहि, पूज्योऽतिथिरसि" इति। एवमभिधाय वाचैव सूनृतया कृताऽऽतिथ्यं तं राजसुतम् आश्रमं नीत्वा विधिवत् पूजयामास; पप्रच्छ च कृताऽऽतिथ्यं सुखाऽऽसीनं,—"महाभाग! कस्त्वम्?—कुत इमां भूमिमनुप्राप्तोऽसि?" इति। स त्वेवमनुयुक्तस्तुरगमुखानुसरणान्तं सर्व्वमात्मवृत्तान्तमकथयत्।

अथ तां स्ववार्त्ताकीर्त्तने परमप्रीतां स्निग्धामिवाऽऽलोक्य विनयादपृच्छत्,—"देवि! भवत्याः क्व जन्म?—किमसि देवी?—वा विद्याधरी?—वा काऽपि गन्धर्वी? प्रथमे वयसि च कोऽयं

परिहृतभोगस्तपसि आवेशः ?—कथञ्चेदृशो वपुषश्चन्द्रधवला कान्तिः ?" इति। तथाऽनुयुक्ता च सा दीर्घं निश्वस्य, अश्रुभिरभिवृष्टां पुरोभूमिं चक्रे। तदवस्थाञ्च तां दृष्ट्वा राजसुतः आत्मानं कृतापराधमिवाऽऽशङ्क्य, नयनवारि परिमार्ष्टुं सलिलमञ्जलिना उपाहरत्। सा च तेन सलिलेन प्रमृज्य लोचने, निजवृत्तान्तमाख्यातुमुपचक्रमे,—"महाभाग! अस्ति चेत् कौतुकं, तत् समासेन स्ववृत्तं कथयामि, श्रूयताम्;—

सन्ति अप्सरसां चतुर्दश कुलानि लोकेषु विदितानि। एकं भगवतः पद्मयोनेः मनसः समुत्पन्नम्, अन्यत् वेदेभ्यः, अपरम् अग्नेः, अन्यत् अनिलात्, एकममृतात् मथ्यमानादुत्थितम्, एकं सलिलात्, अन्यत् सूर्य्यकरेभ्यः, अपरं चन्द्रमयूखेभ्यः, अन्यत् पृथिव्याः, अन्यत् तडिद्भ्यः निर्गतम्, एकं मृत्युना कल्पितम्, एकम् अनङ्गेन, अन्ये द्वे प्रजापतेर्दक्षस्य अतिप्रभूतासु आत्मजासु मुनेः अरिष्टायाश्च द्वाभ्यां तनयाभ्यां जाते। तत्रामृतदीधितेः करात् यदुत्पन्नं, तस्मात् गौरी नाम कन्या समुदपादि,- ये च दक्षसुतायामरिष्टायां गन्धर्व्वाः समुत्पेदिरे तुम्बुरुप्रभृतयः षट् पुत्राः; तत्र ज्येष्ठः मम पिता हंसो नाम। स चास्मिन् किम्पुरुषे वर्षे गन्धर्व्वाणामधिपतिर्भूत्वा गौरीं तां गौरीमुदवहत्।

अथ सुचिरं बहून् भोगान् भुञ्जानयोस्तयोर्विहरतोः कालेन दुर्लक्षणाऽहमेकैव दुहिता समुत्पन्ना। अतीवधवलकान्तिं मां दृष्ट्वा पिता मे 'महाश्वेता' इति नाम सोत्सवमकरोत्। क्रमेण सुसुखं शैशवमतीत्य यौवनमारूढ़ा, मात्रा सहैकदा अस्मिन्नेव सरसि अच्छोदे स्नातुमागच्छम्। अत्राऽऽगत्य सख्या सह सलीलं विहरन्ती दूरतः समायान्तं दिव्यं कमपि कुसुमगन्धमजिघ्रम्। कौतुकात् तद्गन्धलोभाऽऽकृष्टा कियन्तं दूरं

गच्छन्ती, आगच्छन्तं मूर्त्तमिव कामं कमपि मुनिकुमारं, श्रवणे च तस्य हारिणीं कामपि कुसुममञ्जरीमपश्यम्; दर्शनेनैव स्मराऽऽर्त्तहृदया विह्वला च तत्सहचरं कमप्यपरं मुनिबालकं नत्वाऽपृच्छं,—'कोऽयं युवा?—कुतश्चेयं लब्धा?' इति। स मामवदत्,—'यदि कौतुकं, श्रूयताम्,—अस्ति श्वेतकेतुर्नाम महातपाः दिवि महामुनिः। कदाचित् देवार्च्चनार्थे कमलान्याहर्त्तुं मन्दाकिनीमवतरन्तं मुनिं दृष्ट्वा तद्रूपसम्पदा विमोहिता कमलाऽऽलया लक्ष्मीः कमलवन एव कृतार्थतामगमत्; अददाच्च तत्क्षणजातं तनयमस्मै महर्षये 'तवायम्' इति। स च महामुनिस्तं शिशुमादाय तस्य पुण्डरीकजन्मतया 'पुण्डरीकः' इति नाम कृतवान्। सोऽयं लक्ष्म्यास्तनयः पितृतो लब्धसर्व्वविद्यः, अद्य मया सह कैलासादवतरन् नन्दनवनदेवतया दृष्टः; दृष्ट्वा चैनमतिरमणीयाऽऽकृतिं 'तवैव कर्णाऽऽभरणयोग्येयं पारिजातकुसुममञ्जरी' इति प्रोच्य, सा अनिच्छतोऽप्यस्य कर्णे मञ्जरीमितां न्यदधात्, इति योऽय, यथा चेयमासादिता, तत् सर्व्वमावेदितम्' इति।

अथ विरते तस्मिन्, स तपोधनयुवा ईषद् विहस्य मामवादीत्,—'कुतूहलिनि! किमनेन कथाप्रश्नेन?—यदि ते स्पृहाऽस्ति, तत् गृह्यतामियम्' इत्युक्त्वा स्वकीयात् श्रवणादपनीय, सस्पृहं मदानने दत्तदृष्टिस्तां मदीय एव श्रवणे स्वयं न्यदधात्। तदानीञ्च अङ्गुलिकपोलयोः सङ्गादुभयोरेव स्मराऽऽवेशः समजनि। तत्करतलात् पतन्तीञ्चाक्षमालां तेनालक्षितामेवाहमगृह्णां, न्यदधाञ्च स्वकण्ठे। इत्थम्भूते च व्यतिकरे, मातुराज्ञया अनिच्छन्तीमपि कथञ्चिदेव गन्तुमुद्यतां मां सकोप इव स प्राह,—'चपले! अपहृतामक्षमालामदत्त्वा पदात् पदमपि न गन्तव्यम्' इति। अहन्तु,—'गृहाणेमामक्ष-

मालाम्' इत्युक्त्वा, अचेतनतया स्वकण्ठात् एकावलीमुन्मुच्य मन्मुखार्पितदृष्टेः तस्य प्रसारितकरकमले निहितवती। ततश्च मदीयताम्बूलकरङ्कवाहिणीं मामनुगच्छन्तीमागत्य सोऽब्रवीत्,—'कल्याणिनि! केयं तरुणी?—दुहिता वा कस्य?—याति वा कुत्र?' इति। ततस्तया निखिले मद्वृत्तान्ते कथिते, स युवा वल्कलप्रान्तमापाद्य तमालपल्लवरसेन निजपाणिकमल-कनिष्ठाङ्गुलिनखराग्रेण च तत्र,—

'दूरं मुक्तालतया बिसासितया विप्रलोभ्यमानो मे।
हंस इव दर्शिताऽऽशो मानसजन्मा त्वया नीतः॥'

इत्यार्य्यां विलिख्य पुनः सप्रणयं मत्सखीमाह स्म,—'वत्से! लेख्यमिदं त्वया प्रच्छन्नमस्यै सुन्दर्य्यै देयम्' इति। सा तु तरलिका नाम जवेन मत्पार्श्वमागत्य, तद्विरहार्त्तां मां सञ्जीवयन्ती प्राह,—'भर्त्तृदारिके! यदर्थं खिद्यसे, तेनेयं पत्रिका तुभ्यं दत्ता' इति ताम्बूलभाजनात् तामाकृष्य मह्य-मदात्। अहन्तु तत्र तामार्य्यां वाचयित्वा, बुद्ध्वा च तदर्थं पुनरपि नितरां कामाग्नितप्ता,—'काऽहम्?—केयम्?—क्वाऽऽसम्?—किं करोमि?—कोऽत्र प्रतीकारः?' इत्यादिकं किमपि तदा नाध्यगच्छम्।

अथापराह्णे छत्रधारिणी मे समुपेत्य मामवदत्,—'भर्त्तृ-दारिके! यौ तौ मुनिकुमारावच्छोदसरस्तीरेऽस्माभिर्दृष्टौ, तयो-रेको द्वारि तिष्ठति, कथयति च—'अक्षमालां प्रार्थयितुमुपा-गतोऽस्मि' इति; श्रुत्वा भर्त्तृदारिका प्रमाणम्' इति। श्रुत्वैव कञ्चुकिनमाहूय—'प्रवेशयैनम्' इति समादिश्य, तेन च प्रवेशितं तस्य सखायं द्वितीयं मुनिकुमारमवलोक्य यथावदभ्यर्च्य,—'किमसौ वक्ष्यति?' इति तन्मुखाऽऽसक्तदृष्टिरासम्। स च सवैलक्ष्यं,—'राजपुत्रि! त्वद्विरहानलेन सन्तप्तो मे सखा, तदेनं

कृपया सञ्जीवय, एष मया अञ्जलिर्विरचितः, यदत्र क्षेमं, तत् कुरु साम्प्रतम्' इति प्राह। 'किमस्मै सन्दिशामि' इति चिन्तयन्त्या एव मे माता श्रुतमदस्वास्थ्यवार्त्ता समागच्छतीति प्रतीहारीमुखादाकर्ण्य, प्रकाशभियाऽस्य चापल्यस्य, असौ मत्प्रत्युत्तरकालमनपेक्ष्यैव तिरोऽभूत्।

अथ सुचिरं स्थित्वा जनन्यां प्रतिगतायां, विरहाऽऽर्त्ता अहं समं तरलिकया कृताभिसरणवेशा तमुद्देशमगच्छम्। गच्छन्ती च दूरात् रुदितध्वनिमिव श्रुत्वा,—'किमेतत्?' इति शङ्किता वेपमानहृदया सत्वरं गत्वा, उपरतममुं, विलपन्तञ्च तत्सुहृदमपश्यम्। ततश्च तदा विचित्रपदं बहु रुदतीं, विलपन्तीम्, अनुमरणकृतनिश्चयाञ्च मां सहसा चन्द्रमण्डलविनिर्गतः दिव्यः कश्चित् पुमान् नभोदेशात् आगत्य आश्वासयन्नब्रवीत्,—'वत्से! मा त्याक्षीः शरीरं, पुनरनेनैव समागमं लप्स्यसे' इति वदन्नेव, उपरतं तमङ्के गृहीत्वा दिव्यं लोकमगात्। 'किमिदम्?' इति सखायं तं पृच्छन्तीं मां स किमपि नोक्त्वा,—'सखायं मे अपहृत्य दुरात्मन्! क्व यासि?' इति वदन्, बद्धपरिकर एव तमनुससार। अवलोकयन्त्या एव मे सर्व्व एव ते नक्षत्रमण्डलमविशन्। ततश्च तया दिव्यगिरा समाश्वासिता विस्मिता च, त्यक्त्वा सर्व्वान् भोगान् तमेव ध्यायन्ती, तयैव तरलिकया सह वनमिदमध्यवात्सम्"।

इत्यावेदिते तया निखिले स्ववृत्तान्ते, चन्द्रापीडः तद्दुःखद्रवीभूतहृदयः शनैः शनैः तां पुनरब्रवीत्,—"देवि! तव सा परिचारिणी इदानीं क्व?" इति। साऽवदत्,—"राजपुत्र! यानि चतुर्दशाप्सरसां कुलानि समासतः प्रागुक्तानि, तत्रामृतादुत्पन्ने एकस्मिन् कुले मदिरा नाम कन्या जाता; तथा दक्षसुतायां मुनौ गन्धर्व्वादुत्पन्नश्चित्ररथो नाम। स चास्मिन् किम्पुरुषे

वर्षं बहूनां गन्धर्व्वाणामधिपतिरासीत्, पर्य्यणयच्च तां मदिराम्; तयोश्चाभिमतमिन्द्रियसुखं भुञ्जानयोः सुलक्षणा 'कादम्बरी' नाम परमसुन्दरी कन्या जज्ञे। सा च मे बाल्यसखी, मयैव सार्द्धं विविधविद्यया, सङ्गीतशास्त्रेण, बालसुलभाभिः क्रीड़ाभिश्च शैशवमतिवाहितवती। सा तु मदीयेनैतेन दुःखेन नितरां व्यथिता प्रतिज्ञामकरोत्,—'महाश्वेतायां सशोकायां नाहमात्मनः पाणिं ग्राहयिष्यामि;—यदि अनभिलषन्तीमपि कदाचित् पिता मां बलात् कस्मैचित् समर्पयितुमिच्छति, तदाऽहमुपवासेन वा, अग्निना वा, गरलेन वा, उद्बन्धनेन वा निश्चितमेव जीवितं त्यक्ष्यामि' इति। पितरौ च तदेकापत्यतया श्रुत्वा दुहितुर्निश्चयं, स्वयं किमपि नोक्त्वा मत्समीपं सन्दिदिशतुः,—'वत्से महाश्वेते! त्वयैव मे पुत्री उपदेष्टव्या' इति। अहन्तु तन्नियोगात् ज्ञात्वाऽऽत्मानं तद्वत्, तामुपदेष्टुं मत्पार्श्ववर्त्तिनीं तरलिकां,—'गच्छ त्वं मद्वचसा सखीं कादम्बरीं, किं शोकार्त्तामपि मामतिशयेन शोचयसि? यदि मद्वचनं तव प्रमाणं, यदि च मां जीवन्तीमिच्छसि, तदा कुरु वचनं पित्रोः' इत्युपदेष्टुं प्राहिणवम्। अधुनैव सा प्रयाता, समनन्तरमेव महाभागः प्राप्त इमां भूमिम्" एवमुक्त्वाऽसौ विरता।

अन्येद्युः तरलिका केयूरकनाम्ना केनचित् गन्धर्व्वदारकेण सह समागत्य प्रणम्य च प्राह,—"देवि! अयमाख्यया प्रहितस्तस्या एव वीणावाहकः केयूरकः सर्व्वमाख्यास्यति" इति। ततः केयूरकेण कादम्बर्य्याः सुनिर्बन्धे कथिते, महाश्वेता,—"गच्छ त्वम्, अहं स्वयमेव गत्वा यत् कर्त्तव्यं, तत् करिष्यामि" इत्युक्त्वा तं विससर्ज।

अथ याते केयूरके, महाश्वेता चन्द्रापीड़मुवाच,—"राजपुत्र! किन्नरविषयो रम्यः, गन्धर्व्वनगरी हारिणी, देवी च

कादम्बरी महाऽनुभावा मे सखी, यदि ते कौतुकं, गमने च न किञ्चित् हीयते,—तदद्य मया सह तत्र गन्तव्यम्" इति। स प्राह,—"देवि! दर्शनतो भवत्याः परवानयं जनः, तद् यथेच्छसि, तथैव करोमि" इत्युक्त्वा तमेवेन्द्रायुधमारुह्य तया सह गन्धर्वराजधानीं गतः; तत्र च कादम्बरीमकाशमवाप। कादम्बरी तु प्राप्तां महाश्वेतामालोक्य कुशलप्रश्नाऽऽदृतां कण्ठे भृशं समालिलिङ्ग; प्रोवाच च,—"कोऽयं त्वया सहाऽऽगतो महाभागः?" इति। तदाकर्ण्य महाश्वेता प्राह,—"सखि! राजपुत्र एष मनुष्येषु गुणसिन्धुः, अतीव प्रियदर्शनः, परं प्रेमभाजनमस्माकं, तदेनं यथावत् समर्हय जितमदनं रूपेण"। एवमुक्ते तया, सा राजपुत्री कादम्बरी तस्य रूपेण धर्षिता, परवशा च मदनेन स्वसमीप एव तस्मै आसनं ददौ। अथ महाश्वेता कृतपादप्रक्षालना तया कादम्बर्या सहैकमासनं भेजे; चन्द्रापीडश्च यथाऽर्हं तदासनमलञ्चकार।

अत्रान्तरे कादम्बरीचन्द्रापीडयोरन्योऽन्यावलोकनात् अनुरागपरवशयोः कोऽपि चेतसि मान्मथो विकारः प्रादुरासीत्। सा सुकेशी पुनःपुनस्तद्वक्त्रं सतृष्णं विलोकयन्ती स्वचक्षुषोः साफल्यं, मनुष्यलोकस्य च धन्यतां रमणीयताञ्चामन्यत। चन्द्रापीडोऽपि तदवलोकनेन निजजन्मनः श्रमस्य च साफल्यं, किन्नरमिथुनस्य चानुसरणमुपकारि मेने। अथ हंसदुहिता प्रीत्या विचित्रमालप्य, ताम्बूलदानावसरे सा चित्ररथपुत्री प्रोक्ता,—"सखि! राजपुत्र एषः, प्रीत्याऽस्माभिरद्य समर्चनीयः, तदग्रत एवास्मै ताम्बूलं देहि"। श्रुत्वैतत् सा सव्रीड़माह स्म,—"सखि! लज्जेऽहमनेनोपचारेण, तत् त्वमेवास्मै प्रयच्छ" इति।

अथ सा महाश्वेताया निर्बन्धात् स्वयं दाने नियुक्ता वलितग्रीवा कथमपि अस्मै ताम्बूलमदात्; तदा तत्करकमल-

स्पर्शसुखेन मन्मथाऽऽवेशात् शून्यहृदयतया करकिसलयपरिभ्रष्टं निजं रत्नवलयमपि न ज्ञातवती। राजपुत्रस्यापि तत्करतलसङ्गमे तदा कोऽपि चेतोविकारः प्रादुरभवत्,—येन धीरप्रकृतिरपि स आत्मनो विकृतिं गूहितुं न शशाक। अनन्तरं मदिराचित्ररथाभ्यां द्रष्टुं समाहूता महाश्वेता तद्दर्शने जिगमिषुः कादम्बरीमवादीत्,—"सखि! राजसुतस्यास्य यथाऽर्हं स्थानं निर्दिश"। स्मित्वा असौ,—"निखिलकुमारीणां मनांसि अस्याधिवासाय सन्ति, भूयः किं कल्पयामि?" इति मनसा कथयन्ती, व्यक्तमब्रवीत्,—"सखि! दर्शनमात्रादेवाहं स्वशरीरस्याप्यप्रभुरस्मि, किं पुनर्विभवस्य?—तत् सन्दिश त्वमेव, यत्रास्मै रोचते, यत्र च ते मानसं प्रीतिमेति"।

अथ सा महाश्वेता,—"क्रीड़ापर्व्वतमणिवेश्म अस्य निवासार्थं सन्दिश" इत्यादिश्य गन्धर्व्वराजसमीपमगात्। चन्द्रापीड़ोऽपि क्रीड़ापर्व्वतमणिमन्दिरं प्राप। तत्र च राजपुत्रश्च विसृष्टान् विविधान् भोगान् भुञ्जानः, अपराह्णे समागतां समनुरूपं हारमादाय कादम्बर्य्याः प्रधानसहचरीं मदलेखामद्राक्षीत्। सा समुपेत्याभ्यधात्,—"युवराज! उदधिः सर्व्वाणि रत्नानि अर्थिभ्यः प्रदित्सुरिमं शेषाऽऽख्यं हारं वरुणाय, वरुणो गन्धर्व्वपतये, असौ च देव्यै कादम्बर्य्यै प्रादात्, देवी च त्वां प्राप्यैव असौ कृतार्थीभविष्यति इत्यवधार्य्य अनुप्रेषितवती; यदि चासौ तव वपुषो नानुरूपः, तथाऽपि देव्याः प्रथमः प्रणयभङ्गस्त्वया न कार्य्यः" इत्युक्त्वाऽसौ चन्द्रापीड़स्य कण्ठे तं हारं न्यदधात्। स च राजसुतस्तया सह देव्या गुणकथाः कुर्व्वन् भृशं मुमुदे। अथ गतायां तस्यां, कादम्बरी अल्पपरिजना तमभिनन्दितुं क्रीड़ापर्व्वतमाययौ। स च समागतां तां सत्कृत्य भूमाविव उपाविशत्; साऽपि भूतल एव तस्थौ।

अथासौ राजपुत्रः,—"दर्शनमात्रकृतानुग्रहे दासजने कोऽयमादरातिशयः? न खलु स्वस्य गुणलेशं पश्यामि, यत्फलमीदृशः प्रसादस्ते" इत्येवंरूपाभिर्विविधाभिर्वाग्भिस्तां परवशामकरोत्, सा च तं कटाक्षैः। स्थित्वा च कियन्तं कालमसौ राजबाला केयूरकं तत्र नियुज्य प्रायात्। स च तस्मिन्नेव शिलातले केयूरकेण संवाह्यमानचरणः कादम्बर्या महान्तमनुभावम्, अनुरागञ्च महाश्वेतायाः, सौजन्यातिशयञ्च सखीनां, मनसा भावयन् रजनीमत्यवाहयत्।

अथ प्रातः महाश्वेतामुखेन देवीं प्रसाद्य गमनानुज्ञां प्रार्थयमानः प्रोवाच,—"स्मर्त्तव्योऽयं जनः परिजनकथासु कदाचित् देव्या" इति। तस्याः तु कृच्छ्रादनुमतो गमनाय गन्धर्वसूनुभिः साकम् अच्छोदं, तत्र च संस्थापितम् इन्द्रायुधखुरपुटमनुसृत्यैव समागतं निजं स्कन्धावारमाससाद। तत्र च वैशम्पायनप्रमुखैः अमात्यैः, राजन्यवर्गैः, सेनापतिभिश्च भृशमभिनन्द्यमानः गन्धर्वपुरवृत्तं तेभ्यः सङ्कीर्त्तयन् न्यवसत्।

अथापरेद्युः स एव केयूरकः विविधान् भोगानादाय तत्राऽऽगात्। तमागतमभिवीक्ष्य चन्द्रापीडः दूरादेव "एह्येहि" इत्युक्त्वा सादरं पर्य्यष्वजत। तस्माच्च विरहार्त्तामतीव देवीं विदित्वा, अश्वमारुह्य पत्रलेखया केयूरकेण तेन च सह पुनर्गन्धर्व्वनगरमागात्; आगत्य च हिमगृहमध्यवर्त्तिनीं, स्ववियोगशून्यमनसं, भृशमार्त्तां कादम्बरीं, महाश्वेताञ्च तत्र स्थितां दृष्ट्वा प्रणम्य परिजनोपनीतं काञ्चनमयमासनं चरणेनैव समुत्सार्य्य भूमावेव समुपाविशत्।

अथ केयूरकोऽब्रवीत्,—"देवि! पश्य इमामस्य पार्श्ववर्त्तिनीं द्वितीयं हृदयमिव ताम्बूलदात्रीं पत्रलेखाम्"। तदाकर्ण्य देवी तां यथावत् सत्कृत्य स्वाऽऽसन एव न्यवेशयत्,

अमन्यत च तद्रूपगुणसम्पदाकृष्टचित्ता प्राणेभ्योऽपि प्रियाम् । अथ राजपुत्रः तां तथाभूतां स्वाऽऽलोकनप्रमुदितां भाविवियोगशङ्कार्त्ताञ्च गन्धर्व्वतनयां पश्यन् सश्लेषमूचे,—"देवि ! कामरतिं हृदि कृत्वा अद्य तीव्रः सन्तापः प्राप्तः ?" इति । श्रुत्वेदं मदलेखा समुचितमुत्तरं प्रादात्,—"राजपुत्र ! कौमारभाववर्त्तिन्या अस्याः किं किं न घटेत ?" इत्थं सश्लेषवचनादस्याः सन्देहदोलाऽधिरूढहृदयश्चन्द्रापीड़ः महाश्वेतया समं विविधाभिः मधुरालापगर्भाभिः कथाभिः दीर्घकालमतिवाह्य, तत्प्रेमपाशबन्धनादात्मानं कथञ्चित् मोचयित्वा तत्सन्निधानात् स्कन्धावारं जिगमिषुर्गमनानुमतिं ययाचे । देवी तु कथञ्चित् गमने मौनेनैव कृतानुमतिः केयूरकमुखेण,—"यास्यति पत्रलेखा पश्चात्, इदानीमेषा तिष्ठतु" इति सादरमनुरुरोध । स च,—"देवीप्रसादमेषाऽनुभवतु" इति तां तत्र स्थापयित्वा पुनः स्कन्धावारं स्वमाससाद ; ददर्श च तत्र समागतान् पितुर्लेखहारान् । "अविलम्बेन कुमारः समायातु" इति लेखार्थमाकलय्य कादम्बरीनिराशः सुहृदं वैशम्पायनं सेनासन्नयनाय, सेनाऽध्यक्षं मेघनादञ्च पत्रलेखाऽऽनयनाय समादिश्य, अश्वमात्रसहायः तदानीमेव प्रतस्थे । आगत्य चातर्कितमेव पित्रोरतुलां मुदमातत्य, कादम्बरीवियोगसन्तप्तो वहिः सुखितभावं प्रकटयन् तस्थौ । कतिपयदिवसापगमे च कादम्बर्य्या विसृष्टा पत्रलेखा समागत्य देवीविषयं निखिलं वृत्तान्तमावेदयन्ती,—"बहुना किमुक्तेन, देव्याः प्राणास्त्वदायत्ताः, कालातीतेषु जगतां तादृशरत्नवियोगात् आन्ध्यं स्यात्" इत्युवाच ।

इति पूर्व्वकादम्बरीकथासङ्ग्रहः ।

---

# उत्तरकादम्बरीकथासङ्ग्रहः।

चन्द्रापीड़स्तु तामवस्थां कादम्बर्य्याः समाकर्ण्य मूर्च्छावशोऽभूत्; कृच्छ्रेण च लब्धसंज्ञः कथमपि गमनाय उपायं विचिन्तयन्, कियन्तं कालं गमयन्, एकदा सिप्रातटे तयैव पत्रलेखया सार्द्धं भ्राम्यन्, त्वरया समायान्तं सानुचरं केयूरकमपश्यत्। आगतञ्च तं दूराऽऽनतं दोर्भ्यामालिङ्ग्य, देवीकुशलं तत्सन्दिष्टञ्चापृच्छत्। "अद्य तु कुशलं देव्याः, यदपृच्छत् भवान् तस्याः कुशलम्; न च किञ्चित् तया मयि सन्दिष्टं, नापि आर्य्यया अहं प्रेषितः। 'यातः कुमारः' इति वाचं श्रुत्वैव सा सुदीर्घं निश्वस्य मूकीभूता केवलं शयनीये लुलोठ, नैवालपत् स्वां सखीं मदलेखां, नाप्यस्मान् पार्श्ववर्त्तिनः परिजनान्। तथास्थिता वयम् एकदा तयोक्ताः,—'कथमत्र यूयं मत्सकाशे स्थिताः? न कार्य्यं मे युष्माभिरत्र स्थितैः' इति। अहन्तु तदभिप्रायं बुद्ध्वैव त्वरया ते पादमूलमुपागतोऽस्मि, तत् साम्प्रतं गमनेन त्वद्विरहानलसन्तप्तां तामचिरेण समुज्जीवयतु देवः" इति केयूरकेणाभिहितः कुमारः समधिकां मूर्च्छामवाप। कथञ्चिदुद्बुध्य च गन्तुमिच्छन् मनसा बहु व्यचिन्तयत,—"कथमद्य पित्रोरभ्यनुज्ञामनवाप्तवतः मम गमनं स्यात्?—किं व्यपदिश्य पित्रोरनुज्ञां लभे? स्पष्टञ्च,—'सा वियोगार्त्ता' इति कथं कथयामि? कस्मिंश्च राज्यधुरां सन्न्यस्य यामि? कश्चात्र कार्य्ये मे सहायो भवेत् तं सुहृदं वैशम्पायनमृते? सोऽप्यद्यापि नाऽऽयातः" इत्येवं चिन्तयतोऽस्य 'प्राप्तः स्कन्धावारो दशपुरमद्य' इति किंवदन्ती श्रुतिपथमानन्दयामास। ततः प्रीत्या केयूरकमाह,—"भद्र! देवी मया प्राप्तेत्यवगच्छ, ममासौ सखा प्राप्तः, यो मे गमने सहायो भवेत्। तत् त्वमेतां पत्रलेखामादाय अग्रतो याहि, अहमनु-

पदम् एवाऽऽगतः। यत् सन्देष्टव्यं, तदेषा स्वयमेव देव्यै निवेदयिष्यति। त्वया च मद्वचसा बद्धाञ्जलिना प्रणम्य सा तथा विज्ञाप्या, यथा आगमनं मे विफलं न स्यात्, यथा च जगत् अन्धं न स्यात्, तथा कार्य्यम्” इति तां पत्रलेखां नियुज्य, सख्युदर्शनार्थं पितरौ विज्ञाप्य, कतिपयैरनुचरैः सहित एवातर्कितं दशपुरं प्रायात्।

अथ तत्राऽऽगत्य सुहृदमदृष्ट्वा, सेनाऽध्यक्षान् विषण्णान् विलोक्य अनिष्टं तर्कयन् सुदीनः तान् पप्रच्छ,—“कथमत्र सखा मे न दृश्यते ? किमस्य सञ्जातम् ?” तं च शिरसा प्रणम्य व्यज्ञपयन्,—“देव ! जीवति ते मन्त्रिसुतः सखा वैशम्पायनः, यन्नागतः, तत्र हेतुं शृणोतु देवः ;—भवति पितुरादेशात् सत्वरं प्रस्थिते, स हि अस्मानवदत्,—‘श्रूयते अच्छोदं सरः अतीव पुण्यतीर्थं, तदद्य अत्र स्नात्वा सर्व्वे श्वोऽविलम्बेन यास्यामः’ इति। तथोक्त्वा अस्मान्, असौ तत्र स्नात्वा समन्ततः किमपि पश्यन् भ्रान्त इव आविष्ट इव प्रोवाच,—‘नाहं यामि, यूयं व्रजत’ इति। तदवस्थं तं दृष्ट्वा अस्माभिस्तदानयनार्थं बहुशो यत्नः कृतः। यदा चास्य निर्बन्धं निराकर्त्तुं न शक्ता वयं, तदा किङ्कर्त्तव्यविमूढैरस्माभिर्देवपादमूलं समुपस्थितम्” इति।

स च राजपुत्रस्तस्य ईदृशं वैषम्यं शृण्वन्, चिन्तयन्नपि न कमपि तद्धेतुं बुबुधे। “भवतु, स्वयमेव तत्र मया गंस्यते, देवी च तत्रैव द्रष्टव्या” इति निश्चित्य गृहं प्रत्यागम्य मन्त्रिगृहस्थितं विदितवृत्तान्तं शुकनासमाश्वासयन्तं पितरमद्राक्षीत्। राजा च पुत्रमुपस्थितमालोक्य सकोप इव,—“वत्स ! तवैवात्र स्खलितं किञ्चिदाशङ्कते मे हृदयं, यन्नाऽऽगतोऽसौ” इति अवदत्। राज्ञस्तादृशीं वाचं निशम्य युवराजः,—“देह्यनुज्ञां वैशम्पायनाऽऽनयनाय, अपयशसश्च

शोधनाय" इत्यवोचत् । शुकनासस्तु श्रुत्वेदं राजानमब्रवीत्,—"किमेवमयुक्तमाशङ्कितं देवेन ? नास्य दोषलवोऽपि चन्द्रापीडस्य अनुभूयते, स तु दुरात्मा तिर्य्यग्जातिविचेष्टः स्वस्याविनयस्य विकृतिमचिरादनुभवतु" इति ।

अथ शुकनाससुतेन पित्रोरनुज्ञां लब्ध्वा तदानयनाय, सपदि करतलगतां देवीं कादम्बरीममन्यत । कृच्छ्रेण च पितृभ्यां मन्त्रिणा च विसर्ज्जितः अचिरादेव पूर्व्वदृष्टमच्छोदं सरः प्रापत् । तत्र समन्ततोऽन्विष्यन् सुहृदम्, अपश्यंश्च अस्य किमपि चिह्नं "भवतु, गच्छामि तावत् महाश्वेताऽऽश्रमं, तत्-सकाशेऽस्य वृत्तान्तस्योपलब्धिर्भवेत्" इति वितर्क्य तत्रैव जगाम ; ददर्श च गत्वा तत्र दीनां तरलिकया धृतदेहां विषादपूर्णां महाश्वेताम् ; मेने च तदवलोकनेन महानिष्टं देव्याः कादम्बर्य्याः ; अवदच्च तां तरलिकां,—"वद त्वमस्या भगवत्या दुःखहेतुं, नाल्पोऽस्य हेतुरनुभूयते ; यतः प्राप्तं मां महाश्वेता नावेक्षते, नैव वदति च किञ्चित्" इति ।

इत्येवमापृच्छमानं तं महाश्वेता स्वयमेवावदत्,—"किमेषा वदेत् ? अहमेव कथयामि, शृणु,—राजपुत्र ! दुःखमिदं आर्तं वक्तुञ्च न शक्यम् । भवन्तमितो गतं श्रुत्वा, कादम्बर्य्यां निराशा अहं पुनस्तपसे इममेवाऽऽश्रममायाता यथापूर्व्वमतिष्ठम् । एकदाऽहं कमपि विप्रयुवकं भवतः समवयसमद्राक्षम् । स तु मां दृष्ट्वा व्यग्रः प्रोवाच,—'सुन्दरि ! किमर्थं त्वया तपः क्रियते ? पीडयति मां मृणालकोमलायाः ते अयं वयसः आकृतेश्च अत्यन्तविसदृशः तपश्चरणाऽऽयासः । भवादृशी चेत् विषयसुखेभ्यः निःस्पृहा कठोरतपसा क्लेशयति आत्मानं, तदा कामोऽधिज्यं धनुर्वृथा वहति । हे कृशाङ्गि ! तव रूपसम्प-दाऽहं प्रधर्षितः, विह्वलचेताश्चाभवम् । कामः पञ्चानामत्र

शराणां लक्ष्यं मां करोति, तन्मां पाहि"। अहन्तु तं तस्य दुष्टभावं बुद्ध्वा न किञ्चिदप्येनम् अवोचम्; अगाच्च ततोऽन्यत्र, तत्रस्था तरलिकामाहूय,—'वारय दुष्टाऽऽशयमेनं, यथा न पुनरत्र आयाति, आयास्यत् चेत्, नास्य क्षेममभविष्यत्' इति अवदम्।

अथ स तदानीमकृतार्थः पुनर्निशीथे ज्योत्स्नया धवलोज्ज्वले समुपेत्य, किमपि वाञ्छन् पाणौ प्रसारयामास। अहन्तु तदा क्रोधविवशा तथा दुराशयं तमशपम्,—'अहो! पञ्चभूतानि इत्थमविनीतस्य ते देहमधुनाऽपि न आत्मनि विलाययन्ति? तिर्य्यग्जातिरिव शुकस्त्वमित्थं प्रलपसि? तदेतामेव जातिं सद्यः समाप्नुहि, नैवं कदाचिदविनयं पुनः करिष्यसि' इति वाक्यावसान एव स्वकृतात् पापात्, मच्छापवचनात्, गतजीवं भूमौ पतन्तं तमहमपश्यम्; अश्रौषञ्च तदनु त्वत्सुहृदं तम्"। श्रुत्वैतत् राजपुत्रस्तामाह,—"देवि! जन्मनि अस्मिन् देव्याः कादम्बर्य्याः सेवां कर्त्तुं न मया पारितम्। जन्मान्तरे त्वमेव तत्समागमविधात्री भव" इति ब्रुवत एव तस्य हृदयमस्फोटत सद्यः। तदवस्थं चन्द्रापीडं दृष्ट्वा तरलिका तां महाश्वेतां विहाय "हा! हा! किमिदमापतितम्!!" इति कृत्वा तस्य देहं दधार। महाश्वेता तु तदवलोक्य यत् व्यलपत्, तत् केन वक्तुं शक्यते?

अत्रान्तरे देवी कादम्बरी अच्छोदसरःसमीपमागतं चन्द्रापीडं निशम्य, महाश्वेतादर्शनच्छलेन पित्रोरनुज्ञां लब्ध्वा कृताभिसरणनेपथ्या रतिरिव कामं,—"यदि सत्यमागतः स शठः, नाहं तमालपामि, अद्य त्वयैव वक्रोक्तिभिरसौ वाच्यः" इत्येवमुपदिश्यमानया सख्या मदलेखया सार्द्धं पत्रलेखाधृतपाणिः केयूरकेण दर्शिताध्वा आगत्यैव, तदवस्थं तमालोक्य

मोहमगात्। पत्रलेखा अपि कादम्बर्याः पाणिमुत्सृज्य उपरतस्य राजसुतस्य समीपमागत्य गतचेतना भूमौ न्यपतत्। कृच्छ्रेण च लब्धसंज्ञा कादम्बरी स्वकृते उपरतं कुमारमवगत्य भृशं मूढेव, लिखितेव निश्चलस्तब्धदृष्टिः, अन्तःस्थशोकभारेण निस्पन्दा, स्त्रीप्रकृतिविरुद्धेन चेतसा अतिष्ठत्। मदलेखा तु कृताऽऽर्त्तनादा तथाऽवस्थितां तामवोचत्,—"भर्त्तृदारिके! मा कुरु शोकं, कुलं पाहि, भवत्या ईदृशीमवस्थां श्रुत्वा पितरौ नियतं प्राणान् प्रहास्यतः" इति। सा तामुवाच,—"मूढे! जिजीविषोः पित्रारक्षणे वाञ्छा भवति, मम तु जिजीविषैव नास्ति, मत्प्रियमनेन सह गन्तुं प्राणास्त्वरन्ते। तत् मदीयं समग्रं द्रव्यजातमर्थिभ्यः प्रयच्छ, क्रीड़ाशैलं कस्मैचित् मुनये प्रदेहि, वीणां स्वयं स्वीकुरु, पितरौ सान्त्वय, मा त्वं मत्कृते शोकं कुरु" एवमुक्त्वा स्वसखीं, महाश्वेतामाश्लिष्याब्रवीत्,—"सखि! प्रत्याशाऽस्ति ते काऽपि, मम तु साऽपि नास्ति, तत् त्वामामन्त्रये, जन्मान्तरे भूयात् पुनस्त्वत्सङ्गमो मे" इति।

अथ सा युवराजदेहं पुष्पैरलङ्कृत्य,—"त्वच्चरणौ मदर्थं क्रान्तौ" इति तौ स्वाङ्के निधाय समुपाविशत्। अत्रान्तरे तद्देहतो धवलं ज्योतिरुद्गम्य खमुद्भासयन्नब्रवीत्,—"महाश्वेते! पूर्व्वमसि मया समाश्वासिता,—यतः प्राणान् धारयसि। अस्ति च मदीये लोके अक्षत एव देहस्ते पुण्डरीकस्य। समये प्राप्स्यसि पुनः तेन सङ्गमम्। चन्द्रापीड़शरीरान्त्विदं स्वत एवाविनाशि, ममैव देहोऽयम्। विशेषतः कादम्बरीकरतलस्पर्शात् आप्यायितम्। स्वल्पेनैव कालेन शापावसानात् अनया सङ्गंस्यते। भवत्याः विश्वासार्थमत्रैव अनया समर्च्यमानम् आ शापावसानात् तिष्ठतु" इति। इत्थमशरीरां वाचं निशम्य, दृष्ट्वा चैतत् ज्योतिरुदितं, पत्रलेखावर्ज्जं सर्वास्ताः सुविस्मिता आसन्।

सा तु पत्रलेखा तस्य ज्योतिषः तुहिनशीतेन स्पर्शेन प्राप्तचेतना उत्थाय उन्मत्ता इव वेगात् प्रधाविता—"विना वाहनं सुदूरमुपगते देवे चन्द्रापीडे, त्वं पुनरेकाकी क्षणमपि अत्रावस्थातुं नार्हसि" इति कथयन्ती, अश्वपालहस्तात् इन्द्रायुधं प्रगृह्य सहसैवाच्छोदसरसि निममज्ज। क्षणान्तर एव सरस उत्तिष्ठन् स मुनिकुमारः कपिञ्जलो महाश्वेतया दृष्टः; प्रणम्य च पृष्टः सर्वं वृत्तान्तमशेषतः समकथयत्,—"देवि! तदा मम सुहृदेहं उत्क्षिप्य नीते, "कं देशं मे सखायं नयसि?" इति वदन् तमनुसरन्नहं तेनैव महापुरुषेण चन्द्रलोकं गतः; तत्र महोदयाऽऽख्यायां सभायां चन्द्रकान्तमणिमये शयनीये तद्देहं संस्थाप्य सोऽवदत्,—'कपिञ्जल! अवेहि मां चन्द्रमसम्। सखा ते कामार्त्तः,—'यत्त्वं मां निपीडयसि भृशं करैः, तस्मात्त्वमपि अहमिव जन्मनि जन्मनि मर्त्यं भावं प्राप्य, एवमेव तीव्रतमां विरहव्यथामनुभूय प्राणान् त्यक्ष्यसि' इति मां निरागसं शशाप। श्रुत्वैतच्छापवचनमकृताऽऽगसि मयि, भृशं कुपिताऽहमस्मै प्रतिशापमदाम्,—'भव मत्समानसुखदुःखस्त्वमपि' इति। तदनु मम महाश्वेताव्यतिकरोऽस्य विदितः। असौ च मन्मथस्वजातात् अप्सरसः कुलात् सम्भूतायाः गौर्याः समुत्पन्ना, तया च अयं स्वयमेव पतित्वेन वृतः। शापदोषादस्मात् स्वकृतादेवासौ भुवि मया सह द्विर्जनिष्यते,—येन च 'जन्मनि जन्मनि' इति तव सुहृदुक्ता वीप्सा चरितार्था स्यात्। तत्तस्य शरीरमिदमाशापान्तात् मया रक्षितं मदीय एव लोके तिष्ठतु। आचक्ष्व चास्य पित्रे वृत्तान्तमिमं, सोऽपि महाप्रभावः यदत्र क्षेमं, तत् कुर्यात्'। एवमुक्तं सद्य एवास्य पितृसमीपं गच्छन्तं शाकविवशं त्वरया प्रमादतः कृतोल्लङ्घनः कोऽपि विमानविहारी क्रोधनः पथि मामशपत्,—'यस्मात् अतिप्रशस्तेऽपि नभोमार्गे

वाजीव मामुल्लङ्घ्य त्वरया यासि, तस्मात् त्वं वाजी भूत्वा मर्त्त्यलोकं याहि' इति। अहन्तु सवाष्पनेत्रः प्रणतस्तमवोचं,—'भगवन्! अज्ञानात् सुहृद्व्यसनदुःखेन गच्छतो मे सुहृदिष्टार्थं व्यग्रस्य अपराधमिमं क्षमस्व, शापमिमं कृपया प्रतिसंहर' इति। स तु,—'नैव मे वचनमन्यथा भवेत्, तत्तव प्रणत्या तुष्टोऽहं तथा विधास्यामि, यथा,—यस्य वाहनं भविष्यसि, तस्यान्ते जलमज्जनेन ते शापान्तः' इति। एवमभिहितः पुनरहमवोचम्;—'भगवन्! तेन मे प्रियसुहृदा, चन्द्रेण साई शापवशात् मर्त्त्यलोके जनिष्यते, तत् भगवान् एवमनुगृह्णातु मां,—यथा अश्वजन्मनि अपि मे वयस्येन समं वियोगो मा भूत्' इति। स तु क्षणमिव ध्यानस्तिमितलोचनः पुनरुवाच,—'अनेन ते मित्रानुरागेण द्रवीकृतं मे चित्तम्; दृष्टञ्च मया उज्जायिन्यां तारापीड़स्य राज्ञः पुत्रत्वमवाप्स्य सुधाकरेण, पुण्डरीकेणापि शुकनामाऽऽख्यस्य तदमात्यस्य; त्वमपि सख्युस्ते मित्रस्य चन्द्रात्मनः राजतनयस्य वाहनरूपेण स्थितस्तत्रैव सुहृत्सङ्गं लप्स्यसे' इति। अथ सद्य एवाहं जलधौ न्यपतम्, अश्वो भूत्वा उदातिष्ठञ्च, स्मृतिशक्तिस्तु मे नापगता,—येन एतदर्थमेव तुरङ्गमुखमिथुनानुसारेण युवराजो वाहनेन मया एतद्देशमानीतः; यश्चासौ अज्ञानात् भवत्या शापानलेन भस्मीकृतः, सोऽपि मे प्रियसुहृदः पुण्डरीकस्यैव अवतारः पूर्व्वजन्मसम्भूतात् अनुरागसंस्कारादेव त्वयि साभिलाषः अभवत्" इति।

श्रुत्वा चैतत् महाश्वेता, द्वितीयजन्मन्यपि अविस्मृतमहाश्वेताऽनुरागं वैशम्पायनमेव स्वाप्रियतमं पुण्डरीकं ज्ञात्वा, तथा आत्मानमेव तस्य हन्त्रीं निश्चित्य, मुक्तकण्ठं सारस्ताड़नं विविधं विलपन्ती क्षितौ आत्मानं पातयामास। कपिञ्जलस्तु सानुकम्पं बहुविधाऽऽश्वासवचनैस्तां सान्त्वयामास। अथ किञ्चिदुप-

शान्तायां महाश्वेतायां, विषखवदना कादम्बरी तमपृच्छत्,—"भगवन्! कपिञ्जल! त्वया अश्वरूपिणा सहैव पत्रलेखा जलं प्राविशत्, सा क्व गता?—अस्ति काचिद् वार्त्ता तस्याः?" इति। "जलमज्जनानन्तरं न जानेऽहं कदानीं चन्द्रापीडस्य आत्मा, पुण्डरीकात्मकस्य वैशम्पायनस्य च जन्म, का वा तस्या वार्त्ता इति; तत् यामीदानीं सुहृत्पितुः पार्श्वं सर्व्ववृत्तान्तावगमाय" इत्युक्त्वा तस्मिन्नन्तर्हिते, सा देवी कादम्बरी समाश्वस्तमना: दिव्यैर्विचित्रैः कुसुमादिभिरत्यादरेण युवराजदेहमर्चयन्ती तं दिनमतिवाह्य, अन्येद्युस्तथैव दिव्याङ्गमविकृतं दृष्ट्वा सविस्मया समाश्वस्ता च सख्यै मदलेखायै अदर्शयत्। सा च प्रमुदिता आसीत्।

ततस्तदनुगामिनः विषादलुप्तप्रतिपत्तीन् राजलोकान् आकार्य्य, कादम्बरी निखिलं तद् वृत्तं तेभ्यः निवेद्य तं देहं सन्दर्शयामास। दृष्ट्वा च ते सुविश्वस्तास्तां प्रशशंसुः,—"देवि! त्वत्सम्बन्धादेतत् सर्व्वं शुभोदर्कं सम्पत्स्यते" इति। अपरेद्युश्च चन्द्रापीडस्य पुनर्जीवने सञ्जातप्रत्यया सा,—"सखि! इममपूर्व्ववृत्तान्तं पितरं मातरञ्च गत्वा विज्ञापय, यथा तौ मदीयेन दुःखेन न दुःखितौ तिष्ठतः, यथा च अत्र आगत्य मामेवंविधां न पश्यतः, तथा करिष्यसि" इत्युक्त्वा मदलेखां प्रेरितवती। गत्वा च सा प्रत्यावृत्त्य,—"सखि! सिद्धं ते समीहितम्" इत्युक्त्वा चित्ररथसन्देशं तां व्यजिज्ञपत्। अत्रान्तरे कादम्बरी राज्ञस्तारापीडस्य चरान् प्राप्तान् निशम्य मेघनादात्, आनाय्य तान्, दर्शयित्वा च तद्देहं, निवेद्य च सर्व्वं वृत्तान्तं, कुमारस्य उपरतिवार्त्तां प्रकाशयितुं निषिध्य च,'दृष्टोऽस्माभिः अच्छोदसरसि स तिष्ठति' इति वक्तुमुपदिश्य च, तैः सह त्वरितकं नाम कुमारसेवकम् उज्जयिनीं प्राहिणोत्। आगत्य ते उज्जयिनीं, राजानं राज्ञीञ्च व्यक्त-

मूचुः,—"दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः, शेषन्तु अस्मात् त्वरितकात् शृणुतम्" इति।

अथ राजा तस्मात् सर्व्वं वृत्तान्तमाकर्ण्य कष्टं विस्मय-करञ्चावगत्य सपरिवारस्तत्रायासीत्। आगत्य च तद्देह-मविकृतं तथैव दृष्ट्वा कादम्बरीप्रभावात् सर्व्वं शुभोदर्कमम-न्यत। आगतं नरेन्द्रं श्रुत्वा "हा! हताऽस्मि" इत्यभिदधाना ह्रिया धावित्वा महाश्वेता गुहाऽभ्यन्तरं, देवी च कादम्बरी तूष्णीमिव मोहान्धकारमभजेताम्। राजा तदवस्थं सुतं शोचन्तीं स्वां प्रियां विलासवतीमुवाच,—"देवि! साम्प्रतं खेदोऽयुक्तः, सान्त्वय वत्सां कादम्बरीं स्नुषां मे मोहगतां, यत्प्रभावात् सुतदेहमद्यापि पूर्व्ववदविकृतं पश्यामः"। अथ सा राज्ञी तामुत्सङ्गे निधाय, परिमृज्य मुखं, निवार्य्य च वाष्पौघमवा-दीत्,—"वत्से! भाग्यात् तेऽहमद्यापि पश्यामि वत्सं, त्यजाम्ब! मोहम्"। एवमाश्वासिता सा चन्द्रापीड़नामो-च्चारणेन विलासवतीदेहस्पर्शेन च लब्धचेतनाऽपि लज्जानम्र-मुखी परवत्येव यथाक्रमं श्वश्रूश्वशुरादीनां गुरूणां चरणौ नत्वा विलासवत्याः पार्श्वं भेजे। ते च—"वत्से! अविधवा भव" इति तामाशासत। अथ राजा सभार्य्यः मन्त्रिणा शुकनासेन सह तां स्नुषां तद्देहपरिचर्य्यायै पूर्व्ववत् नियुज्य तपस्तप्तुमुपचक्रमे"। जावालिरित्थं सद्वृत्तान्तं सर्व्वं सर्व्वान् मुनीन् श्रावयित्वा अव-दत्,—"पश्यत, सोऽयं कामोपहतचेताः, स्वकृतादेव अवि-नयात् दिव्याल्लोकात् भ्रष्टः पुण्डरीकः मर्त्त्येऽस्मिन् वैशम्पायन-नामा शुकनासपुत्रः अभवत्। स एव एषः पुनः निजाऽऽचरिते-नैव दुर्व्यवहारेण चाञ्चल्यदोषाच्च कोपितस्य पितुः महाश्वेता-यास्च शापात् शुकतामगात्" इति।

अथ शुकः शूद्रकमाह,—"राजन्! मुनौ तस्मिन् मदीयं

वृत्तं कथयति, मम तत्क्षणमेव जन्मद्वयान्तरस्मृतिराविरासीत्। ततः च सुहृदादीनां महाश्वेतायाश्च कृते उत्सुकचेताः, स्वाविनयश्रवणलज्जया आनतशिरा विलीयमान इव शनैः शनैः अवोचं तमहं महर्षिं प्रणतः,—'भगवन्! तत्रास्ति मे जिगमिषा, यत्र मे सखा मदीयेन विरहेण स्फुटितहृदयः पञ्चत्वमगात्'। स तु किञ्चित् कुपित इव मामवदत्,—"दुरात्मन्! नाद्याप्यपगच्छति ते चाञ्चल्यम्? गमनक्षमो भूत्वा गमिष्यसि, तावत् सुखमत्र तिष्ठ" इति। मम तु महाश्वेतायामनुरागः, चन्द्रापीडे च तत् सौहृद्यं पूर्व्ववदेव मनसि स्थानमाप, तेन तयोरुभयोः सकाशं गन्तुं मनो मे नितरामुत्कण्ठितमभूत्।

अथ हारीतः कुतूहली पितरमपृच्छत्,—"तात! कस्मादसौ मुनिसुतोऽपि तथा कामाधीनः सञ्जातः, येन जीवनमपि धारयितुं नाशक्नोत्? कथं वा दिव्यलोकसम्भूतोऽपि तथा स्वल्पायुरासीदिति?" पिता तमब्रवीत्,—"वत्स! स्पष्टमेव अत्र कारणम्; कामरागमोहमयात् अल्पसारात् स्त्रीवीर्य्यात् केवलादुद्भूतिः। श्रुतिरपि एवमस्ति,—'यादृशात् वै जायते, तादृगेव भवति' इति"। एवं कथाः समाप्य सर्व्वान् मुनीन् विसर्ज्य च रात्रावसाने स्वयं स्नानाय उदचलत्। मुनिपुत्रोऽपि मां शयने संस्थाप्य प्रातःकृत्यसम्पादनाय गतः। इत्थमापदां स्मरणेन व्यथितं 'किं करोमि इदानीम्' इति च चिन्तयन्तं मामभ्येत्य स्मेराननः हारीतोऽब्रवीत्,—"भ्रातर्वैशम्पायन! दिष्ट्या वर्द्धसे, त्वामन्विष्यन् पितुस्ते भगवतः श्वेतकेतोः सकाशात् कपिञ्जलः प्राप्तः" इति। श्रुत्वैतत् विवशत्वात् "मां तत्र नय, यत्राऽऽस्ते स मम पूर्व्वः सखा" इति वदन्नेव समीपमुपगतं तं चुम्बितुमिच्छन्निव आश्लिष्यन्, गद्गदिकारुद्धरवः सुदीनया वाचा अव-

दम्. "सखि! जन्मदयात् परमद्य तव दर्शनं प्राप्तं, विमुखे विधौ सर्व्वाणि अभिलषितानि विमुखान्येव भवन्ति प्रायेण"। सोऽपि मामुत्तोल्य मद्वियोगदुःखदुर्बले वक्षसि निवेश्य गाढमालिङ्ग्य च, मच्चरणौ स्वशिरसि निधाय भृशदीनश्चक्रन्द, ममाश्वासयामास च हृद्यैर्वचोभिः।

अथ पितुः कुशलं पृष्ट्वा,—"मद्वार्त्तामाकर्ण्य पिता किमुक्तवान्, कुपितो न वा ममोपरि?" इति अपृच्छम्। ततस्तेन "आवयोः सर्व्वं वृत्तान्तं पित्रा ते विज्ञाय, विमुखं दैवञ्च ते प्रशमयितुं कर्म्माऽऽरब्धं, माता च लक्ष्मीस्तत्र व्यापृता; ताभ्याञ्चैतत् समादिष्टं,—'अत्रैवाऽऽश्रमे आ कर्म्मसमाप्तेर्वस, चाञ्चल्यं मा गाः, अचिरेण शुभं भावि' इति। अधुना यास्याम्यहं पितुस्ते पार्श्वम्, इतः कुत्रापि न यातव्यम्, अहमपि तत्रैव कर्म्मणि व्यापृत एव" इत्युक्त्वा गते तस्मिन्, अहं कतिपयान् दिवसान् तत्रैवाऽऽश्रमेऽतिष्ठम्। एकस्मिन् दिवसे महाश्वेतानिमित्तं समुत्कण्ठितचेताः आत्मानं समर्थं मत्वा 'तत्सकाशं गत्वा तिष्ठामि' इति निश्चित्य उत्तरां दिशं गृहीत्वा नभसि उदपतम्; आन्तश्च कियन्तमध्वानमुड्डीय, कस्यचित् तरोर्मूले निपत्यास्वाप्सम्। चिरात् प्रबुद्धश्च आत्मानं पाशबद्धं दृष्ट्वा सुदुःखितः पुरतः स्थितमन्त्यजमेकं सुदीनया वाचा अब्रवं,—'भद्र! कस्त्वम्? कथं मां पाशबद्धं कृतवानसि? यदि आमिषपिपासा त्वां बाधते, तत् किं सुप्तस्यैव मे जीवननाशं न अकार्षीः? मया पुनः प्रियजनादृष्टत्वासमुत्कण्ठेन दूरं यातव्यम्; न विलम्बं सहते मे हृदयं, मुञ्च मां, किं निरपराधेन मया बन्धनक्लेशमनुभावितेन? मम प्राणत्राणात् ते कुशलं भवतु' इति। स्मित्वा असौ प्रत्यब्रवीत्,—'महाभाग! दासोऽस्मि, का मम शक्तिर्भवतस्त्राणे? मद्भर्त्तुः शवराधिपतेः पुत्री कुतूहलिनी

अस्ति पक्षिपोषणे। तस्याः श्रुतिपथं नीता केनापि दुष्टेन वार्त्तैषा यत्—'जावालेराश्रमे अस्त्यतिगुणवान् कोऽपि शुक-शिशुः' इति तमादातुं बहवोऽनुचरास्तया प्रेषिताः, मया तु लब्धोऽसि, साम्प्रतं तत्सकाशं त्वां नयामि, सैव तव बन्धने मोक्षणे च अधिकारिणी' इति। अहन्तु तदाकर्ण्य वज्रताड़ित इव शिरसि, भृशम् उद्विग्नान्तःकरणः भूयोऽपि सविनयं तमवदं,—'भद्र! जातिस्मरोऽहं मुनिपुत्र आसं, तदस्मात् शवरसंसर्गात् मां परित्राय धर्म्मसञ्चयं कुरु, त्यज माम्' इत्युक्त्वा तस्य पादयोरपतम्। स तु मद्वचनमनादृत्य निर्भर्त्स्य च मां गृहीत्वा पक्कणाभिमुखं प्रस्थितः।

अथ तेन उपानीतं मां दृष्ट्वा हसितमुखी शवरदुहिता तत्करात् मामादाय,—'पुत्रक! प्राप्तोऽसि, यास्यसि क्वेदानीम? व्यपनयामि ते कामचारित्वं दुराचार!' इत्युक्त्वा अमेध्ये पञ्जरा-न्तरे निवेशयामास। 'धिक् पुण्डरीक! यत्त्वं मुनितनयत्वम-पास्य एतां दशां प्राप्तोऽपि पुनः चण्डालस्य पाणौ पतितः!! युक्तमिदं ते दुर्विनीतस्य मूढ़!' इत्थं स्वाऽऽत्मानं बहुशो निन्दन्, —'नैवाहमालपामि; अनालपतो मे मोक्षो भवेत्; अथवा नाश्नामि, न पिबामि; एवं कुर्व्वन् सत्वरं निन्द्यामेतां तनुं परित्यक्ष्यामि' इति निश्चित्य तूष्णीमासम्।

अथ तया चाण्डालदारिकया आलप्यमानोऽपि, तुद्यमानो-ऽपि, पुनः पुनः पानाशनार्थम् अनुरुध्यमानोऽपि न किञ्चिदहम-गृह्णां, केवलं बहुशः चीत्कारमकरवम्। ततस्तया प्रोक्तं,—'किमे-तत् न पिबसि?—न चाश्नासि?—नास्ति फले कश्चिद् दोषः, जलं चाण्डालभाण्डादपि भूवि पतितं न दोषाय। यदि तेऽत्र विचिकित्सा, तत् कथमिमां दशां प्राप्तोऽसि? अग्रतस्तथा विमृश्य प्रवर्त्तितव्यं,—यथा नानुतप्येत' इति। अहन्तु चण्डालजात्य-

सदृशेन तस्याः तेन वाक्येन विवेकेन च विस्मितः, तद्वाक्यं तदानीं युक्तं मन्यमानः जीवितटष्णया तानि फलानि अभक्षयम्, अपिबञ्च सलिलम्; परं मौनन्तु न अमुञ्चम्। इत्थं कियन्तं कालं नयन्तं, क्रमेण च तरुणत्वमापन्नं, सहसैकदा प्रत्यूषे तत् पक्कणाख्यं चाण्डालपुरम् अपर दिव्यलोकमिव, तां चाण्डालदारिकां रूपिणीं लक्ष्मीमिव, तच्च स्वं पञ्जरं सौवर्णं दृष्ट्वा। निवृत्तचण्डालवासवसतिदुःखम्, अतीव विस्मितं, 'चित्रम्!! एतत् किम्?' इति प्रष्टुमुद्यतञ्च मां समादाय सा कन्या भवत्पार्श्वमायाता। तत् केयम्?—कथमसौ आत्मानं चाण्डालत्वेन ख्यापितवती?—कथं वा माम् अबध्नात्?—कथं वा अत्र आनीतवती? तत् भवानेव इमां पृच्छतु" इति।

अथ नृपेण शूद्रकेण पृष्टा सा विस्मृतनिजरूपं तं, निजं रूप स्मारयामास,—"तारापते! त्रैलोक्याऽऽनन्द! रोहिणीकान्त! कादम्बरीहृदयवल्लभ! चन्द्र! स्वस्वायमेनं त्वमवगच्छ। अस्य स्वस्य च पूर्व्वजन्मवृत्तान्तम् आकर्णितवान् एव भवान्। अत्रापि जातौ कामान्धः अयं दुर्वृत्तः, निवारितोऽपि पित्रा, तच्छासनमनादृत्य वधूसमीपं प्रस्थितः; तदप्यसौ स्वयमेव अकथयत्। 'आ शापमोचादेनं बद्धा रक्ष,—यथाऽनुतापः स्यात्' इति अस्य पिता मामादिशत्, ततो मया बद्धोऽयम्, एतावन्तं कालं रक्षितश्च। अहमस्य माता श्रीः, भवत्सकाशमेनमनयम्। सम्प्रति भवतोः शापान्तसमय उपस्थितः, शापान्ते च युवयोः सममेव सुखेन भवितव्यम्, इति मयाऽयमत्राऽऽनीतः। जनसमागमपरिहारायैव आत्मनश्चाण्डालत्वं प्रकटीकृतम्; तदिमे जन्मजराव्याधिमरणाऽऽदिदुःखभूयिष्ठे निन्द्ये तनू त्यक्त्वा, अनुभूयतां युवाभ्यां दिव्यलोकोचितमभिलषितम् इष्टजनसमागमसुखम्" इत्यभिधाय सा सद्य एव तिरोदधे। ततः स नृपतिः सपदि

कादम्बरीं स्मरन्, तद्विरहानलसन्तप्तः परां कामवशता-मवाप्य शूद्रकदेहं तत्याज; शुकोऽपि महाश्वेताविरहेण तनुं विजहौ।

अथ माधवे एकस्यां निशायां देवी कादम्बरी कामार्त्ता, मकरकेतोः परमास्त्रेण वसन्तेन उत्कण्ठितमानसा, कामदेवस्य महोत्सवे कृच्छ्रेण अतिवाहितदिवसा, सायाह्ने सम्पादित-कामार्च्चना निजं कान्तं चन्द्रापीडं विचित्रकुसुममाल्यैः, चन्द-नेन, विचित्रैः रत्नैश्च भूषितं कृत्वा निर्निमेषा आपिबन्तीव प्रेमाऽऽर्द्रया दृष्ट्या, पुलकितसर्व्वाङ्गी, धैर्य्यं धारयितुमशक्नुवती सहसा तस्योपरि पतित्वा जीवन्तमिव तं गूढमालिलिङ्ग। आलि-ङ्गितश्च तया असौ सुप्तोत्थित इव सहसा संज्ञां प्राप्य, अतिहर्षेण तां दोर्भ्यां भृशमालिङ्गन्, भीतामालोक्य प्रियां श्रुतितर्पणेन स्वरेण प्रहर्षयन् प्रोवाच,—"भीरु! विहाय शङ्काम् आकल्पं मया सार्द्धं विहर। उज्जीवितोऽस्मि तवैव अमुना अमृतसंकाऽऽह्लादिना कण्ठग्रहेण। उक्तमेव मया पूर्व्वं, यत्—एतदाविनाशि शरीरं, विशेषतस्तव करतलस्पर्शात्; एतावन्त्यपि दिनानि त्वया करेण स्पृश्यमानोऽपि यत् न उज्जीवितोऽस्मि,—तत् शापप्रभा-वात्; अद्य तु अपगतः स शापः, अतः सम्प्रति तं समालिङ्ग-नात् प्रबुद्धोऽस्मि। शापात् यत् मया मर्त्त्यशरीरं शूद्रकाऽऽख्यं प्राप्तं, तत् त्यक्तं शापावसानात्। तव प्रीत्या वपुरेतत् चान्द्रे लोकेऽपि ममास्ति। तदयं लोकः चन्द्रलोकश्च द्वावपि ते पाद-तललग्नौ विद्धि। तव सख्याः पतिः पुण्डरीकोऽपि मदीय एव लोके तिष्ठति, सोऽपि मयैव सह विगतशापः सञ्जातः, क्षणेनैव तेन सङ्गंस्यते महाश्वेता" इति।

अत्रान्तरे नभसः कण्ठेन तामेवैकावलीं बिभ्रत्, तेनैव सख्या कपिञ्जलेन सह विरहक्षामः, स पुण्डरीकः अवतरन्

अदृश्यत। दूरत एव तमवलोक्य सा कादम्बरी स्वयमेव धावित्वा यावत् महाश्वेतां पुण्डरीकागमनवार्त्ताकथनमहोत्सवेन न संवर्द्धयति, तावत् पुण्डरीक आगच्छन् चन्द्रापीडमुपजगाम। चन्द्रापीडस्य सखायमेनं कण्ठे जग्राह, जगाद च,—"सखे! यदि चैतद्वपुर्योगात् जामाताऽसि, तथाऽपि अनन्तरजन्माऽऽहितेन आकल्पं सखिभावेनैव मयि वर्त्तस्व" इति।

अथ केयूरकः तत्क्षणं चित्ररथं हंसञ्च आवेदयितुं, मदलेखा च तारापीडं विलासवतीञ्च संवर्द्धयितुमगाताम्। राजा सुतमुज्जीवितं तेन मन्त्रितनयेन साकं निशम्य, आनन्दाब्धौ पतितमात्मानममन्यत। "क्वासौ? क्वासौ?" इति पुनः पुनः तां पृच्छन्, समुत्थितः सभार्य्यः स्वेन मन्त्रिणा सार्द्धं तनयदर्शनाय सद्यः समाजगाम। चन्द्रापीडः पितरमागतं मातरं शुकनासञ्च दृष्ट्वा, भूतलनिहितमौलिः पादावेतेषां ववन्दे। अथ सत्वरमागम्य तथा प्रणतं तमुत्थाप्य पित्रा,—"यद्यपि पुत्रस्त्वमद्य सञ्जातः, तथाऽपि चन्द्रमसं देवं त्वां जाने, अपि च मयि योऽयं नमस्यः आसीत्, सोऽपि मया त्वयि निधापितः; तत् उभयथाऽपि त्वमेवासि सर्व्वेषां नो वन्द्यः" इत्येवमुक्तः, मात्रा च प्रस्नुतस्तन्या वात्सल्यात् परिष्वक्तः, मन्त्रिणा आशीःसहस्रेण संवर्द्धितश्च लज्जानम्राऽऽननं पुण्डरीकं करे गृहीत्वा उपसृत्य यथाक्रमं शुकनासं मनोरमाञ्च आबभाषे,—"तात! वैशम्पायन एषः वः प्रणमति, गृहाण तनयं स्वम्" इत्येवमुक्ते सोत्सवं स कपिञ्जलः किञ्चित् हसन्नुक्तवान्,—"मन्त्रिन्! भगवान् महर्षिः श्वेतकेतुर्भवन्तं प्राह,—'यद्यप्ययं मम सुतः शापावमुक्तो मयैव ग्राह्यः, तथाऽपि संवर्द्धित एवायं केवलं [illegible], पुत्रस्तु तव एव। मया मत्तेजोऽत्र संस्थाप्य ब्राह्मे लोके [illegible] प्रक्रान्तं, तत् त्वयाऽयं वैशम्पायन

एव इति मत्वा अविनयात् रक्षणीयः, न चोपेक्षणीयः परोऽय-मिति कृत्वा, तवैवायम्, अद्यापि भवत्तु एव बद्धस्नेह एषः' इति। अथासौ मन्त्रिवर्य्यः तं तनयं पुण्डरीकं वैशम्पायनमेवेति बुद्ध्वा पर्य्यष्वजत, अभवच्च स्नेहाऽऽकुलः पूर्व्वतोऽपि समधिकम्। महाश्वेता च तं पुण्डरीकमासाद्य भृशं मुमुदे। सोऽप्येनां लज्जानम्रवदनामङ्के कृत्वा नितरां हर्षमापयौ। तौ च हंसचित्ररथौ मदिरागौरीभ्यां सकलगन्धर्व्वलोकेन च तत्र समागत्य जामातृदर्शनात् मुदितौ, सपरिजनयोः तारापीड़शुकनासयोः अनुमतौ स्वां स्वां पुरं कन्याजामातरौ नीत्वा, यथावत् परिणयविधिं सम्पाद्य च, स्वं स्वं राज्यमनयोः यौतकमुपाहरताम्। एवं तौ पुण्डरीकचन्द्रापीड़ौ अभिमतरमणीमङ्गमुदितौ प्रणयपरवशौ च चक्रवाकाविव सुखेन कालं निन्यतुः।

अथैकदा देवी कादम्बरी पत्रलेखाऽर्थं साश्रुनयना विषण्णमुखी भर्त्तारं प्राह,—“देव! वयं सर्व्व एव मृता अपि पुनर्जीविताः, परस्परं सम्मिलिताश्च; सा पुनः वराकी तव साङ्गनी पत्रलेखा क्व गतेति महत् कौतुकं मे; तद् ब्रूहि तस्या वृत्तान्तम्” इति। चन्द्रापीड़ः प्राह,—“प्रिये! सा हि रोहिणी, शप्तं मां ज्ञात्वा मद्दुःखदुःखिता ‘कथं त्वमेकाकी एव मर्त्त्यवासदुःखमनुभवसि?’ इत्युक्त्वा निवार्य्यमाणाऽपि मया मत्परिचर्य्यार्थं मर्त्त्यलोकेऽवातरत्। मान्तु विरतं दृष्ट्वा सा स्वं धाम प्रपेदे। पुनर्मया सह मर्त्त्यलोके स्थातुमिच्छन्त्यपि मया निर्भर्त्स्य बलात् निवारिता; मदीये लोके तां द्रक्ष्यसि। अयं लोकः मदीयश्च लोकः सम्प्रति त्वदधीन एव” इति। कादम्बरी तु रोहिण्याः तथा पतिव्रततया उदारतया स्नेहलतया च विस्मिता परं लज्जिता च तूष्णीं तस्थौ।

एवं प्रियां परितोष्य गन्धर्व्वपुरे कतिपयान् दिवसान्

स्थित्वा, ततः पितरमुपेत्य समकालमेव अनुभूतदुःखं राजलोकं विभूत्या स्वसमं कुर्वन्, मन्त्रौ पुण्डरीके राज्यभारं निधाय राजप्रीत्या जन्मभूमिस्नेहाच्च अवन्त्यां, रोहिणीप्रीत्या चान्द्रे लोके, गन्धर्व्वराजगौरवेण च हेमकूटे, पुण्डरीकप्रीत्या लक्ष्मी-निवाससरसि, कादम्बरीरुच्या च तेषु तेषु रम्यतरस्थानेषु विहरन् न केवलं चन्द्रमाः कादम्बर्य्या सह, कादम्बरी महा-श्वेतया, महाश्वेता पुण्डरीकेण, पुण्डरीकोऽपि चन्द्रमसा सह परम्पराविरोगेन कालं नयन्तः परमां प्रीतिमवापुः ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितः

उत्तरकादम्बरीकथासङ्ग्रहः ।

---



# शुद्धिपत्रम् ।

| पृष्ठा | पङ्क्ति | अशुद्धिः | शुद्धिः । |
|---|---|---|---|
| ३ | ४ | अर्गाचत | अगाचयत् । |
| " | ११ | आगच्छत् | आगच्छन्तम् । |
| " | २२ | गांमिष्यन्ते | गंस्यते । |
| ४ | १० | प्राप्त | भुते । |
| १२ | ४ | तेनानुमतः | तस्यानुमतः । |
| १३ | ३ | साहाय्यकत्व | साहाय्यकाय । |
| १५ | ११ | महसत्त्वतया | महासत्त्वतया । |
| २३ | १९ | अददद्दकाञ्जलिम् | अददाद्दकाञ्जलिम । |
| २४ | १ | तातं | ताताय । |
| २४ | २३ | मौनमतिष्ठत | मौनी अतिष्ठत् । |
| २५ | १७ | पुनरिव आज्ञया गुर्गोजंगां | पुनः आज्ञया गुर्गोर्जगामिव । |
| २८ | ४ | गांमिष्यन्ते | गंस्यन्ते । |
| ५१ | १० | वृत्तान्तस्योपलब्धिर्भवत्" | वृत्तान्तोपलब्धिर्भवेत" । |
| ५४ | २३ | अमं पित | अस्य पिते । |
| " | २४ | शाक | शोक- । |



